॥ श्री. ॥



॥ श्रीमते रामानुजाय नमः ॥

श्रीमन्महाचार्यप्रथमदासश्रीनिवासाचार्यप्रणीता

# यतीन्द्रमतदीपिका



विद्याभूषणतिरुनांगूर प्रतिवादिभयङ्कर श्रीमद्-

अण्णङ्गराचार्य

विरचितया लघुवर्तिकानाम्न्या व्याख्यया समन्विता ।



व्याख्याता—

श्रीकेशवदेवशास्त्रिद्वारा वृन्दावनस्थश्रीरङ्गनाथमुद्रणालये

मुद्राप्य प्रकाशिता विजयताम् ।



श्रीरामानुजजयन्ती ९५९

सन् १९७६

सं० २०३३ वै० शु० पञ्चमी
प्रथम संस्करण १००० प्रतयः

मूल्यं रु० ५)५० पैसे
प्रेषणव्ययः पृथक्

प्रकाशक—

व्याख्याता—विद्याभूषण निरुनागूर

**प्र० भ० अण्णंगराचार्यः, विद्वान् स्वामी**

**श्रीरङ्गजी मन्दिर, वृन्दावन ( मथुरा ) उ० प्र०**

प्रथम संस्करण १००० प्रतियः

**मूल्यम् रु० २-[illegible]० नये पैसे**

प्रेषणव्ययः पृथक् ।

मुद्रापकः—

**श्रीकेशवदेव शास्त्री**

श्रीरङ्गनाथ प्रेस

वृन्दावन

॥ श्रीः ॥

॥ श्रीगोदारङ्गमन्नारदिव्यदम्पतिभ्यां नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

# अभिनन्दनम्

★

अभिनवव्याख्यालंकृत श्रीमद्यतीन्द्रमतदीपिकाप्रकाशनमवलोक्य प्रमुदितान्तरङ्गा अभिनन्दयामस्तावत्प्रकाशनमेतत्। श्रीमद्रामानुजमुनिप्रवर्तितं विशिष्टाद्वैतदर्शनमार्षव्याख्यानानुसारि विना मिथो विरोधेन सकलश्रुतिवाक्याना स्वरससिद्धं मुख्यमर्थमुपपादयत् त्रय्यन्तवृद्धैस्समाद्रियमाणं वेदान्तप्रस्थानेषु विशिष्टं स्थानमश्नुतीत्यपरोक्षमिद नोपपादनान्तरमपेक्षते। विशिष्टाद्वैतदर्शन ग्रन्थेषु प्रविविक्षुभिः प्रथममध्येतव्यमिदं प्रकरणं यतीन्द्रमतदीपिकासमाख्यातं विलसतीति चानुभूतिसिद्धम्। एतस्य चाभिनवामिमा व्याख्यां नाम्ना लघुवर्तिकां निर्माय श्रीस्वामिपादैर्महदुपकृतं श्रीवैष्णवसमाजस्य कृते। इयं च व्याख्या मूलवाक्याना समन्वयं प्रतिपादयन्ती मूलग्रन्थगूढाशयाविष्करणप्रगल्भा लघुकायाऽपि गरीयसी विषयतः उपादेया वर्तते नितराम्। आशास्महे च मङ्गलानि सव्याख्यानैतद्ग्रन्थमधीत्यादितस्सञ्जातव्युत्पत्तयः श्रीभाष्याद्यध्ययनाधिकारिणो भवन्तो भूयासुस्तत्त्वजिज्ञासवस्तत्त्वज्ञानलक्षणामृतसल्लक्ष्मीभाजः क्रमेणेति॥

श्रीरङ्गजी मन्दिर
वृन्दावन, ६-५-७६

श्रीगोवर्धनरङ्गाचार्यः

।। श्रीमते रामानुजाय नमः ।।





शेषावतार श्रीभाष्यकार श्रीरामानुज स्वामी

तस्मै रामानुजर्याय नमः परमयोगिने ।
य श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ।।

॥ श्रीरस्तु ॥

※ श्रीमते रामानुजाय नमः ※

विद्याभूषणानां तिरुनांगूरप्रतिवादिभयङ्कराचार्यचरणानां व्याख्याकृतां

# संक्षिप्तजीवन परिचयः



श्रीवादिभीकृत् कुलवारिधीन्दुं कृष्णार्यसद्देशिक पुत्ररत्नम् ।
विद्वद्वरिष्ठं सुगुणाभिरामम् अण्णङ्गरार्यं गुरुवर्य मीडे ॥

श्रीयतीन्द्रमतदीपिका व्याख्यातृ्णा श्रीस्वामिपादानां जन्माभूत् दक्षिणभारते चोलमण्डले तिरुनांगूरित्यभिख्याते दिव्यदेशे सौरमानेन परिधावी नामक संवत्सरे सिह-

मासे कृष्णद्वितीयायां ( सन-१९७२ आगस्तमासे ) । गर्भाष्टम एव श्रीमत्पितृचरणैरुभयवेदान्ताचार्यैर्विद्वद्वर्यैः शमदमादिनिखिलात्मगुणपरिपूर्णैःश्रीकृष्णमाचार्य गुरुभि रुपनीता पञ्चसंस्कारसंस्कृताश्चेमे श्रीमत्पितृ चरणाना चरणसेवायामेव तत्परास्तत्सन्निधावेव दिव्यप्रबन्धरहस्यग्रन्थभगवद्विषयादि साम्प्रदायिक ग्रन्थानधीतवन्तः । श्रीभगवद्रामानुजाचार्यवतारधन्यायां श्रीभूतपुर्यां परमपवित्राया दिगन्तविश्रान्तकीर्तीनां विद्वत्प्रकाण्डानां श्रीमदामूरि महा(श्रीमद्रामानुजाचार्या)स्वामिपादानां पादारविन्दयुगलपरिसरे द्वादशवर्षपर्यन्त परिचर्या रता भूत्वा तेषामेवासीमकृपया न्यायव्याकरणमीमांसावेदान्तशास्त्रेषु पूर्णं पाण्डित्यंचाधिजग्मुरेते ॥ मद्रासयूनिवर्सिटोपरोक्षासु न्यायव्याकरणयोः प्रथमश्रेण्या समुत्तीर्णा इमे शिरोमणिबिरुदं प्राप्तवन्तः । दिगन्तविख्यातै परमहंसपरिब्राजकाचार्यैः श्रीमन्नारायण जीयर् स्वामिपादै श्चोभयवेदान्ताचार्य पदवीदानेन संमानिताः । पण्डितमण्डलीतश्च बिद्याभूषणत्वेन समादृता. । श्रीभूतपुर्यामेव वर्षद्वयं यावदध्यापकपदंसस्कृतमहाविद्यालयेऽधिष्ठाय गुर्जरदेशे वडतालनगरे श्रीस्वामिनारायण सस्कृतमहाविद्यालये च पञ्चविंशतिवर्षाणि यावत् प्रधानाचार्यं पदमलमकार्षुः । श्रीस्वामिनारायणसम्प्रदायस्थाश्च बहवः साधवो महात्मानः श्रीस्वामिपादानां सन्निधौ सामान्यविशेषशास्त्राण्यधीत्य न्यायवेदान्तादिषुतीर्थाचार्यं परीक्षासूत्तीर्णाः विलसन्तितराम् । अथ च श्रीरङ्ग क्षेत्रे वर्षद्वयं यावत् श्रीभाष्यादिकमध्याप्यायोध्यायां श्रीरामानुजवेदान्तमहाविद्यालये प्रधानाचार्यपदेवर्षद्वयं स्थित्वा प्रथितानुभावा. सन्तः सांप्रत वर्षपञ्चकत. श्रीमति वृन्दावने श्रीरङ्गमन्दिरे उभयवेदान्तादि सद्ग्रन्थ

प्रवचन निरता विराजन्ते ॥ श्रीस्वामिपादानां दक्षिणभारते बहवः शिष्या जिज्ञासवः सन्त्युपदेश काङ्क्षिणः । अथापि औत्तराहाणा श्रीवैष्णवानां भाग्य भूम्ना साम्प्रतं वृन्दावने कृत निवासा योग्यान् छात्रान् बहून् वेदान्तशास्त्रे पूर्णप्रज्ञान् विदधतः श्रीरङ्गमन्दिरीयशिक्षाप्रचार विभागमुखेन श्रीसम्प्रदायतत्त्वार्थप्रसारण कार्ये व्यापृत्ता. श्रीरङ्गलक्ष्मी संस्कृतादर्शमहाविद्यालये वेदान्तशास्त्रसम्प्रदायविषयेषु मार्मिकप्रवचनद्वारा अनन्त सन्देश श्रीवैष्णसम्मेलनादि पत्रिकासु महत्त्वपूर्णलेखप्रकाशनद्वारा च श्रीसाम्प्रदायिक विषयेषु विशदप्रमितिमुपजनयन्तः श्रीवैष्णवमतप्रचारकार्ये सदा जागरूकाः विलसन्ति । श्रीस्वामिपादैः प्रणीत सिद्धित्रयस्य सिद्धाञ्जन नामक व्याख्यान विद्वद्गोष्ठ्या प्रथितं वर्तते ग्रन्थरत्नम् । तस्य च पुनर्मुद्रण कारणीयं वर्तते । अन्येच कतिपये ग्रन्था श्रीस्वामिपादै. विरचिताः मुद्राप्य प्रचिकाशयिषिताः—ब्रह्मसूत्रादर्शः, श्रीविष्णुसहस्रनाम विवरणं, श्रीगद्यत्रय विवरणं, तत्त्वमुक्ताकलापश्लोकाना विशदव्याख्या चेति । श्रीमद्रामानुजीयदशश्लोकी च श्रीस्वामिपादैर्विरचिता सङ्क्षिप्तहिन्दीविवरणेन सह प्रकाशिताऽस्ति अनन्तसन्देशे, तस्याः निजभाष्यसमाख्याता व्याख्या श्रीस्वामिपादैरेव विलिख्यते सांम्प्रतम् शास्त्रार्थ विचारपूर्णा । सा चाचिरात् प्रचिकाशयिषिता ॥ दशश्लोकी चात्र समायोजिता । यतीन्द्रमतदीपिकाव्याख्यानप्रकाशनमद्य सञ्जातं भगवत्कृपया । वेदान्तादिशास्त्रेषु दासस्य यज्ज्ञान वर्तते, तच्छ्री स्वामिपादानामेव निस्सीमकृपाफलम् । पञ्च विद्यार्थिनः श्रीरामानुजवेदान्ते आचार्य परीक्षायां समुत्तीर्णाः प्रथमश्रेण्यां सुयोग्याधिकारिण. कृताः श्रीस्वामिपादैर्वर्षचतुष्टये ।

अन्येषां च वेदान्त शास्त्राध्ययनं प्रचलत्येवश्रीसन्निधौ। जीवन चैतेषा शास्त्रविचारेणाध्यात्मचिन्तनेन सांप्रदायिकार्थतत्वव्याख्यानेन चौतप्रोत वर्तत इति महदिदं सौभाग्यम्। प्रार्थयामश्च श्रीगोदारङ्गमन्नार् भगवतश्चरणकमलसन्निधौ श्रीस्वामिपादाना दीर्घायुरारोग्यैश्वर्यसमृद्धि साञ्जलिबन्धम्। यत श्रीसम्प्रदायसेवा श्रीस्वामिद्वाराऽव्याहताऽनारतमनुवर्तेत ॥इति॥

सवत २०३३ वैशाख
शुद्धपञ्चमी
श्रीरामानुजजयन्ती
४-५-७६

श्रीस्वामिचरणान्तेवासी
व्याकरणवेदान्ताचार्य
**भागवतरामानुज श्रीवैष्णवदासः**
श्रीरङ्गजीमन्दिर वृन्दावन



॥ श्रीरस्तु ॥

॥ स नो देवः शुभया स्मृत्या संयुनक्तु ॥

॥ श्रीमते रामानुजाय नमः ॥

नमश्चास्मद्गुरुपरम्पराभ्यः

# * प्रास्ताविकम् *



**प्रमाणं च प्रमेयं च प्रमातारश्च सात्त्विकाः ।**
**जयन्तु क्षपितारिष्टैः सह सर्वत्र सर्वदा ॥**

## १—व्याख्यान प्रस्तावः—

श्रीमन्तो नानाशास्त्रपरिश्रमनिर्मलीकृतधीविलासा वेदान्त विद्यारसास्वादलोलुपा विद्वत्तल्लजा वेदान्ताध्यापकाध्येतृमहाभागास्सुहृन्मणयश्च ! विशिष्य श्रीमता मनः प्रमोदनाय साम्प्रतं श्रीमद्यतीन्द्रमतदीपिकाया व्याख्यामेनां प्रणीय नयाम प्राकाश्यम् । बहुशःप्रबन्धमेनमध्यापितवता मनस्यस्माकं समभूद्विचारः, अधीतसामान्यशास्त्रत्वे सत्यनधीतवेदान्तत्वलक्षणबालत्वयुजा वेदान्ततत्त्वमधिजिगमिषूणामद्वैतवेदान्तस्य वेदान्तपरिभाषावद्विशिष्टाद्वैतवेदान्तस्य प्रथम प्रवेशद्वारभूतस्य ग्रन्थस्यास्यातिस्फुटार्थकातिरिक्तसर्ववाक्यविवरणात्मा विषमस्थले तत्र तत्र समुचितपदसमन्वयपदार्थवर्णनमुखेन निगूढविवक्षितार्थाविष्करणचणा च व्याख्या काचन लघ्वी सरसा विधेयेति । सहजकृपामूलकभगवत्प्रेरणाविशेषेणैषविचारस्सम्प्रति समजनिमूर्तः । मासद्वयान्तराल एव लघुवर्तिकानाम्नी व्याख्या व्यरच्यत । रामानुजवेदान्तशास्त्रिपरीक्षादिषु पाठ्यग्रन्थोऽयं साम्प्रतं जातो दुर्लभः । अताम्यश्च बहवः छात्रा एतद्ग्रन्थालाभेन । आशास्महेतरां यत् तेषां कृते व्याख्यासहितोऽयं ग्रन्थो महान्तमुपकारमातनुयादिति । शास्त्रार्थविचारधारा तु ग्रन्थेऽस्मिन् ग्रन्थकारैर्विशिष्य न समादृता । यतो ह्येनत्सिद्धा-

न्तपारिभाषिकपदार्थप्रतिपादनं सिद्धान्ततत्त्वार्थाधिगमनं चाधिकृत्यैव ग्रन्थकृतामियं कृतिः । तत्पद्धतिमनुसरद्भिश्चास्माभिर्व्याख्याने मूले निरूपितानामर्थानामपेक्षितं सयुक्तिकप्रमाणवचनोदाहरणे विशिष्य दत्ता दृष्टिः । प्रौढग्रन्थतः शास्त्रार्थ सरणिस्तु ज्ञेया ।

## २—मूलग्रन्थपरिचयः—

अयं च श्रीविशिष्टाद्वैतवेदान्तप्रकरणग्रन्थो भगवानिव श्रीवासुदेव दशावतारघटितमूर्तिको विराजते । भगवतो ह्यवतारा रक्षणाय सतां तद्द्रुहामभवायाभवन् सज्ज्ञानधर्मप्रवर्तनाय च । तथैवात्रत्या अप्यवतारा सत्पक्षरक्षणं तत्प्रतिपक्षिपक्षनिरसनं तत्त्वत्रय भक्ति प्रपत्तिलक्षणं तत्त्वहित प्रवर्तनाधिकृता विलसन्ति । अत्र च मुख्योविभागो द्विधा—प्रमाणपरिच्छेद प्रमेयपरिच्छेदश्चेति। तत्राद्योऽवतारत्रयात्मकः क्रमशः प्रत्यक्षानुमानशब्दप्रमाण निरूपणप्रवृत्तः । वेदवेदान्तार्थं धर्मतत्त्वे ज्ञानसिद्धि प्रेप्सता निरुक्तं प्रमाणत्रयमेव सुष्ठु वेदितव्यमित्यनुशिष्ट मनुना—'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रय सुविदितं कार्यं धर्मसिद्धिमभीप्सुना ॥' इति । धर्मसिद्धि —वेदार्थज्ञानसिद्धिः । त्रिविधमेव प्रमाणं निर्दिष्टं कापिलैरप्यन्येषां त्रिष्वेवान्तर्भावमभिप्रेत्य 'दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् । त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥' ( सा० का० ) इति । ग्रन्थेचास्मिन् प्रमाणान्तराणां प्रत्यक्षादित्रिके यथायथमन्तर्भावो वर्णितः । यथा—प्रथमेऽवतारेऽनुपलब्धेः प्रमाणान्तरतानिरस्ता । उपमानार्थापत्त्योश्चान्तर्भावोनुमानादौ वर्णितो द्वितीयेऽवतारे । सम्भवैतिह्ययोरपि अनुमानशब्दयोरन्तर्भावोऽभिमतो ग्रन्थकर्तुः ।

## ३—प्रथमावतारमुख्यविषयः—

ज्ञानानां स्वतः प्रामाण्यं ( प्रमात्वम् ) इति वेदान्तिनः । प्रमाणानि ह्युत्सर्गतो यथावस्थितवस्तुग्रहणार्थमेव सङ्कल्पितानि । क्वचित् पुनर्दोषवशात्तेषां संशय भ्रान्तिजनकत्वम् । अतः स्वतः प्रामाण्यं ज्ञानानां, परतश्चाप्रामाण्यमिति साधीयानयं पक्षः । मीमांसक सम्मतं चैतत् । श्रीशालिकनाथमिश्रेण प्रकरणपञ्चिकायास्तृतीयप्रकरणे नयवीथीनामके 'यथार्थं सर्वविज्ञान'मिति गुरूणां ( प्राभाकराणां ) मतं निरूपितम् ॥ अत्र प्रत्यवतिष्ठन्ते तार्किकाः—परत एव प्रामाण्यं ज्ञाना-

नाम्, अप्रामाण्यवत्। प्रयोगश्च भवति। यथा—प्रमा ज्ञानसामान्यकारणातिरिक्तकारणजन्या ज्ञानविशेषत्वात् अप्रमावत्। अप्रमा हि दोषजन्या। तथैव प्रमा गुणजन्या मन्तव्येति॥ तान् प्रति ब्रूम—प्रयोगेऽत्र सिद्धसाधन दोष.। ज्ञानसामान्यहेत्वतिरिक्तदोषाभावप्रयोज्यत्वस्य प्रमात्वेऽस्माभिरप्युपगमात्। तादृशभावहेतुजन्यत्व साध्यते चेत्, तर्ह्यप्रयोजकत्व हेतोः। अनुकूलतर्काभावात्। दोषाभावस्यैव प्रमात्वप्रयोजकत्वेलाघवमिति प्रतिकूलतर्कपराहतत्वाच्चभवत्तर्कस्येति। निर्विकल्पकस्यापि सविशेषविषयकत्वमिति प्रतितन्त्रार्थश्च प्रथमावतारे निरूपित : तथा भ्रमस्थले सत्ख्यातिरिति च समर्थित तत्र। द्रव्ये द्रव्यान्तराशसद्भाव. शास्त्रीयपञ्चीकरणप्रक्रियासिद्धः, प्रतिनिधिविधितदुपपादकन्यायसिद्धश्च। सदृशस्यैव प्रतिनिधित्व युक्तम्। सादृश्य च तदीयाशसद्भावत.। 'तदेव सदृश तस्य यत्तद्द्रव्यैकदेशभाक्' इति न्यायात्। अभाषित च भगवन्तः श्रीभाष्यकृत' 'सोमाभावे च पूतीकग्रहण श्रुति चोदितम्। सोमावयवसद्भावादिति न्यायविदो विदु' इति। प्राभाकरैर्भ्रान्तिस्थलेऽख्यातिरुच्यते। विशिष्टविषयैक ज्ञानाभाव इति यावत्। इदं रजतमितिग्रहणस्मरणयोर्यथार्थयोर्दोषाद्भेदाग्रह एव स्वरूपतो विषयतश्च रजतव्यवहारहेतुरिति तेषा वादः। तेषा मते भ्रान्तिस्थले रजत पश्यामीत्यनुभवविरोधः। सिद्धान्त्यभिमते सत्ख्यातिवादे च निरुक्तानुभवस्य स्वरसत उपपत्तिः। पुरोवर्तिनि रजता शस्यसत एव ग्रहणात्।

प्रसङ्गादत्र वाद्यान्तर सम्मताः ख्यातीः पर्यालोचयाम.। योगाचारमते आत्मख्यातिः। विज्ञानमेवात्मा वासनादोषान्नानार्थाकारेण भासते इति। अत्रवदाम.। अर्थभेदमन्तरा निराकारज्ञानवैचित्र्य दुरुपपादम्। ज्ञानेस्वाकारसमर्पकत्व विषयत्वमिति हि सौगताना परिभाषा। कि च वासनाऽपिनस्थिरा तैरुपगता। क्षणिकस्य पूर्वज्ञानस्यैव वासनारूपस्योत्तरज्ञानहेतुत्वे घटाकार ज्ञानसन्ततौ वर्तमानायां पटाकारप्रतीतेरनुपपत्तिः। किञ्च ज्ञानस्यैवार्थाकारत्वे समूहालम्बने 'इमे नीलपीते' इत्यत्रै कस्यैव ज्ञानस्यविरुद्धाकारद्वयवत्त्वप्रसङ्ग। अतो ज्ञानज्ञेयज्ञातृणा वास्तविको भेदाऽबाधितप्रतीति सद्धो नापलपितुं शक्य इति। माध्यमिकाना मतेऽसत्ख्याति'। अर्थवत् ज्ञानमप्यसदेव सवृत्याख्यदोषात्सदिव भिन्नमिव च भासत इति तदाशयः। एतन्मतमपि न समीचीनम्। असतो भानस्वीकारेऽलोकस्य नरशृङ्गादेरपिभानप्रसङ्गात्। सर्वशून्यत्वस्यसाधकप्रमाणाभावेन तैः साधयितुमशक्यत्वाच्च। सर्वं

सर्वदा सर्वत्र सर्वथानास्तीति निरुपाधिके निषेधे वदतो व्याघात.। वदतः स्वस्यैव सत्त्वात्। अत्रेदानीमिद नास्तीति सोपाधिके निषेधे साध्यमाने च देशान्तरादौ वस्तुनः सद्भावः सिद्ध एवेति। अन्यथा-ख्यातिस्तार्किकाणा भाट्टानां च। तन्मतेऽपि सादृश्यादुपस्थितस्यैव रज-तस्येदमिति पुरोवर्तिनि उपनीतमर्यादया भानस्वीकाराद्रजत पश्यामी-त्यनुभव विरोध। मायावादिनां मतेऽनिर्वचनीयख्यातिः। तत्रेद प्रतिवक्तव्यम् अनिर्वचनीय वस्त्वनिर्वचनीयत्वेनभासते आहोस्विन्निर्वच-नीयत्वेन। नाद्यः कल्प। तथासति रजतादेर्व्यवहारस्यायोगात्। अन्त्ये च कल्पेऽन्यथाख्यातिरेवेति। किञ्च प्रतीतिबाधाभ्या सदसत्त्वे एव कुतो न सिध्येताम्। विरोधादिति चेत्तुल्य सदसद्विलक्षणत्वेऽपि। परस्पर-विरोधे हि न प्रकारान्तरस्थिति'रिति न्यायात्। एव वादान्तरेष्वसा-मञ्जस्य दर्शनात्सिद्धान्त्यभिमतः सत्ख्यातिवाद एव समादरणीय इति ग्रन्थकृदाशयोऽत्रव्यक्तः प्रतीयते।

## ४—द्वितीयावतार सारः—

द्वितीयेऽवतारेऽनुमानप्रमाण निरूपितम्। प्रसङ्गाच्चासिद्धिविरो-धानैकान्त्यबाधसत्प्रतिपक्षाः पञ्च हेत्वाभासाः ( हेतुदोषा. ) निरू-पिताः। अत्यन्तातीन्द्रियस्याप्यर्थस्य साधकमनुमानम्, केवलव्यतिरेकि च लिङ्ग तार्किकैरभ्युपगतम्। तदुभयविषये समीक्षाकृताऽत्रावतारे। अत्रापि किञ्चिद्ब्रूमः। पृथिवी इतरभिन्ना गन्धवत्त्वात् यन्नैव तन्नैव यथा जलादीति केवलव्यतिरेकि कथ्यते तार्किकैः। अत्रोच्यते। यथा पक्ष मात्रवृत्ते रसाधारणस्य हेतोरसाधकत्व शब्दो नित्यः शब्दत्वादित्यादे.। एव केवलव्यतिरेकिणोऽपि। सपक्षान्वयविरहात्। यदि पक्ष एव साध्यान्वयग्रह इष्यते। तर्ह्यसाधारणेऽपि तथा कि न स्यात्। अतएवा साधारणानैकान्तिके केवलव्यतिरेकिणोऽपि समावेशः स्थापितो न्याय-परिशुद्धौ। किञ्च केवल व्यतिरेकिणि अनुमानात् पूर्व साध्य क्वचित् प्रसिद्ध वा नवा। नेति चेत्साध्या प्रसिद्धिः। आद्ये कल्पे पक्षे चेत् सिद्ध-साधनम्। पक्षभिन्ने चेत् तत्र हेतोः सत्त्वेऽन्वयित्वम्। असत्त्वे चासा-धारण्यम्। ननु केवल व्यतिरेकिणोऽनङ्गीकारे लक्षणस्य व्यावर्तक-त्वादि नस्यादिति चेन्न। अन्वयिविधयैव तत्सम्भवात्। यथा सा गौरिति व्यवहर्तव्या, अश्वादिभिन्ना वा सास्नावत्त्वात् यथा मदीया गौरिति। यथावाद्रुतेघृते पार्थिवत्व जलीयत्वसन्देहे इद पार्थिव गन्ध-

वत्त्वात् कुसुमादिवत् इति। दृष्टान्ते चेतरभेदव्यवहारौ लोकत एव सिद्धौ। सन्दिग्धस्थल एव हि न्यायप्रवृत्तिः। एकव्यक्तीश्वरलक्षणेकथम् उच्यते। तत्र शास्त्रत एवेश्वरस्येतरव्यावृत्त्यादिसिद्धेः कृत व्यतिरेकिणा। ईश्वरत्वेन शङ्कितेषु चानीश्वरेषु केषु चिदीश्वरलक्षणव्यतिरेकेणेश्वर भेद साधनत्वन्वय्येवेति। अनुमानेनात्यन्तातीन्द्रियोऽशरीरःकर्ता न सिध्यति। सावयवेषु कार्येषु शरीरिकर्तृकत्वेन कार्यत्वस्य व्याप्तेर्घटादिषु दृष्टतया मह्यादौ सावयवे कार्येऽपि सिषाधयितकर्त्रशरीरत्वविरुद्ध कर्तृ शरीरित्वा क्षेपकत्वाद्विरुद्धत्व हेतोः। अभिमतमिद मीमासकानामपि। उक्त च मानमेयोदये नारायणीये भाट्टप्रकरणे बाधको हेतुर्विरुद्धो विशेषविरुद्ध इति द्विधा। साध्यविशेषस्य विपरीतविशेषेण व्याप्तो विशेषविरुद्धः। यथा क्षित्यादिक सकर्तृक घटवदित्यत्र साध्यस्य क्षित्यादिकर्तुरशरीरत्वं नाम विशेषोऽभिमतः। तस्य विपरीतेन शरीरित्वेन व्याप्त घटादिषु कार्यत्व दृष्टमित्यशरीरत्वस्य बाधक भवतीति ॥ अतो नैकान्ततोऽनुमानेनात्यन्तातीन्द्रियार्थ साधनसम्भव इति । विषयोऽयं समासत उक्तोऽत्रावतारे। अत्रैव निरूपिते हेत्वाभासे च किञ्चिद्विवेचन प्रकुर्मोऽपेक्षितम्। पक्षसत्वादिरूपपञ्चकोपेतो हि सद्धेतुः। हेतुभिन्नो हेतुवदाभासमानोहेत्वाभासो दुष्टहेतुः। रूपपञ्चकान्यतमराहित्य निश्चितव्याप्तिपक्षधर्मत्वाभाववत्त्व वा तल्लक्षणम्। स च पञ्चधान्यायसूत्रे वर्णितः। न्यायपरिशुद्धौ च त एव परिष्कृत्य निरूपिताः श्रीमन्निगमान्तगुरुभिः। 'असिद्धानैकान्तिकविरुद्धा हेत्वाभासाः' (न्याय तत्वे) इति श्रीमन्नाथमुनिभिस्त्रेधा निर्दिष्टाः कालात्यापदिष्टस्य पक्षभासत्व, प्रकरणसमस्यबाधेऽनैकान्त्येऽसाधारणेवान्तर्भावमभिप्रेत्य । भाट्टानामपिसेय रीतिर्दृश्यते। यथोक्त मानमेयोदये 'असिद्धोऽनैकान्तिकोविरुद्धोऽसाधारणश्चेति तदाभासाः'इति। असाधारणस्यानैकान्त्यान्तर्भावे तु त्रयो हेत्वाभासा इति तत्रोक्तम्। यद्वा श्रीमन्नाथमुनिवचन प्रदर्शनार्थमिति युक्तम्। नैयायिकाभिमतस्यानुपसहारिनाम्नोऽनैकान्तिकभेदस्य तु असाधारण एवान्तर्भावो सिद्धान्त्यभिमतः। सर्वस्यैवपक्षत्वे सपक्षस्यैवाभावात् साध्यहेतुसहचारग्रहासम्भवात्पक्षमात्रवृत्तिहेतोर साधारणत्वमित्यसाधारण लक्षणाक्रान्तत्वादनुपसहारिणो हेतोस्सर्वमनित्य प्रमेयत्वादित्यादौ।

पक्षे साध्याभावरूपबाध निश्चयस्थले तु जिज्ञासितसाध्यवत्वरूपपक्षता निवृत्तेर्बाधस्यपक्षदोषत्वमेव सिद्धसाधनवदिति भाट्टावदन्ति।

तार्किकास्तु पक्षादिदोषाणामपि परम्परया व्याप्तिपक्षधर्मत्वासिद्धिरूप-हेतुदोष एव पर्यवसानमामनन्ति। तन्मते साध्यसिद्धेस्त्वनुमितिप्रति-बन्धकत्व कामिनीजिज्ञासावत् स्वातन्त्र्येणैव। न तु तद्वत्ताबुद्धौ तद-भावतदभावव्याप्यवत्तानिश्चयविषयया। तदभाववत्तानिश्चयविषया तद-भाव व्याप्यवत्तानिश्चयविषयावाऽनुमिति तत्करणव्याप्तिपक्षधर्मता ज्ञान प्रतिबन्धक ज्ञानविषया एव हेतोराभासाः दोषाः, इत्युररीकृतम्। अत एव सिद्धसाधनस्थलेन हेतोराभासत्वम्। बाधस्थले तु हेतोराभासत्व-मिति तदाशय। सिद्धान्तिना त्वयमाशयः सिद्धिस्थलेऽपि सिषाधयिषा वालादनुमित्युत्पत्तेर्न सिद्धसाधनस्थले नियमेन पक्षत्वासिद्धि। बाध-स्थले तु आहार्यपरोक्षानङ्गीकारात् सिषाधयिषयाऽप्यनुमित्युत्पत्त्युत्प-त्त्यसम्भावात् नियमेन पक्षत्वासिद्धिरिति कालात्ययापदिष्टस्य बाधि-तस्य हेत्वाभासकोटौ घटना साधीयसीति। बाधस्य तदभाववत्तानिश्च-यविषया, विरुद्धसत्प्रतिपक्षयोः तदभावव्याप्यवत्ता निश्चयविषयाऽनु-मिति प्रतिबन्धकत्वम्। अनैकान्त्य ज्ञानस्य तु व्याप्तिज्ञानविरोधित्वम्। आश्रयासिद्धि स्वरूपासिद्धि ज्ञानयोस्तुपक्षधर्मताधीविरोधित्वम्। व्या-प्यत्वासिद्धिस्थले चोपाधिना व्यभिचारानुमानेन हेतोर्व्याप्तिज्ञानप्रति-बन्ध इति हेत्वाभासेषु दोषज्ञानस्यानुमिति तत्करणान्यतरप्रतिबन्ध-कत्व बोध्यम्।

## ५—तृतीयावतार सारः—

तृतीयेऽवतारे वैदिकलौकिकभेदेन द्विविध शब्दप्रमाणं निरूपित सपरिकरम्। वेदानामपौरुषेयत्व नित्यत्व च। ननुवर्णोत्पत्तिविनाशवा-दिना भवतां मते कथं वेदाना नित्यत्वादि सम्भवतीति चेत्, उच्यते। वेदैकरूपानुपूर्व्या पठ्यमानत्वमेव नित्यत्वम्, वेदानुपूर्व्या. पुरुषस्वात-न्त्र्याधीनरचनत्वाभावादपौरुषेयत्वम्। तथा च श्रीभाष्ये 'इदमेव च वेदस्यापौरुषेयत्वं नित्यत्व च, यत्—पूर्वपूर्वोच्चारणक्रमजनित सस्कारेण तमेव क्रमविशेष स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्। तदस्मासु सर्वेश्वरेऽपि समानम्। इयास्तु विशेष —सस्कारानपेक्ष स्वयमेवानुसन्धे पुरुषोत्तमः' इति ( ब्र० मी० १ अ० ३ पादे देवताधिकरणे। ) श्रीपाञ्चरात्र वैखा-नसागमयोर्दिव्यसूरि पूर्वाचार्य प्रबन्धाना वेदादितुल्य प्रमाणतमत्वं चोपवर्णितम्। तथा सर्वचिदचिद्वाचिपदाना परमात्मपर्यन्त बोधन-शक्तत्व च व्युदपादि।

## ६—चतुर्थावतार सारः—

चतुर्थावतारतः प्रमेयपरिच्छेदोदशमावतार यावत्। स च क्रमेण प्रकृति कालनित्यविभूति धर्मभूतज्ञान जीवेश्वराद्रव्यनिरूपक.। तत्र-चतुर्थेऽवतारे प्रकृतिप्राकृतात्मक चतुर्विशनितत्त्वनिरूपण कृतम्। प्राकृत पञ्चभूतारब्धानि च चतुर्दशभुवनानि। तार्किकैस्तु पृथिव्यप्तेजोवाय्वाकाशकाल दिगात्ममनासि नवद्रव्याण्युपगतानि। तत्र दिग्वर्ज तानि स्वीकृतान्यस्माभि। दिशस्तूपाधिविशिष्टाकाशरूपत्वान्न पृथक् द्रव्यत्व मतम्। भाट्टास्तु उक्तैनवभि सह तमश्शब्दावपि द्रव्यकाटौ निवेशितवन्त। तत्र तमस. पृथिव्यामन्तर्भावो ग्रन्थकारैरेव वर्णित.। शब्दस्तु रूपादिवदद्रव्य गुणविशेष एव शास्त्रसिद्ध। यत्तु शब्दस्य द्रव्यत्वे साक्षादिन्द्रियसनिकर्षग्राह्यत्व घटादेरिवलिङ्गमुक्तम्। तदसिद्धम्। शब्दस्य स्वाश्रयवाय्वाद्यवयवद्वारैव सन्निकर्षेण श्रोत्रग्राह्यत्वोपगमादस्माभिः। चतुर्विशति· प्रकृतिप्राकृतात्मकानि तत्त्वानि श्रुत्यन्तपुराणप्रसिद्धानि साख्यविद्भिराहृतानि चात्रनिरूपितानि। परवादिभिरेतदुपेक्षणे कारण न विद्य.। जीवात्मा च पञ्चविशकः श्रुतिस्मृतिसिद्ध.। 'त षड्विशमित्याहुः सप्तविशमथापरे' (मान्त्रिकोप०) इति श्रुतौ परमात्मनः षड्विशत्व सप्तविंशत्व वाऽऽम्नात कालस्य पृथग्गणनागणननिबन्धनम्। धर्मभूतज्ञानस्यात्मप्रकारत्वेन तदन्तर्भूतत्व नित्यविभूतेश्च श्रीवैकुण्ठनाथ परवासुदेव परमात्मान्तर्भूतत्वं चाभिप्रेत्यास्माक सप्तविशतितत्त्ववादः प्रवृत्तः। शैवास्तु षट्त्रिंशत्तत्व वादिनः। तानि च तत्त्वानि परतत्वं पति. (पशुपति) शुद्ध सत्त्वानि पञ्च-शिवतत्त्व, शक्तितत्त्व, सदाशिवतत्त्वम्, ईश्वरतत्त्वम् विद्यातत्त्वमिति, माया, मायाकार्याणि प्रधानादिपृथिव्यन्तानि चतुर्विंशति., पुंसो, ज्ञकर्तृत्वार्थानि पञ्चतत्त्वानि—कालो, नियतिः, कला, विद्या, राग इति मायाजनितानि, इति षट्त्रिंशत् शैवतन्त्रोक्तानि। तत्र शुद्धसत्त्वाना पञ्चानां पतिस्वरूपा नन्यत्व तैरेव वर्णितम्। विद्यारागयोश्च जीवधर्मज्ञानेऽन्तर्भावोबोध्यः। कालस्य तु न मायाकार्यत्वम्। किन्तु पृथक् द्रव्यत्वमेव शास्त्रतः सिद्धम्। नियतेस्तत्तद्वस्तुप्रतिनियतशक्त्यनतिरिक्तत्व, कला च प्रकृत्यवस्थाविशेष एवाक्षराख्यो नातिरिक्त इति तद्वादनिरसा न्यायसिद्धान्तेऽस्तिकृतः।

## ७—पञ्चमावतार सारः—

पञ्चमावतारे कालतत्त्वनिरूपणम्। तस्य प्राकृतपरिणामहेतुत्व

विभुत्व क्षणादि परिणामित्वमोश्वरीयलीलोपकरणत्वं च वर्णितम् ।

## ८—षष्ठावतार सारः—

षष्ठेऽवतारे नित्यविभूतिवर्णनम् । साचा त्रिगुणा विशुद्धसत्त्वा ज्ञानानन्दस्वरूपा दिव्यमन्दिरादिविविधविचित्रानन्तदिव्यपरिणामा, तत्रत्यश्च भगवद्दिव्यमङ्गलविग्रहोऽस्त्रभूषणैः सर्वतत्त्वधारकः शुभाश्रयः मुक्तप्राप्यो मुक्तभोग्यश्चेति न्यरूपि ।

## ९—सप्तमावतार सारः—

सप्तमेऽवतारे धर्मभूतज्ञाननिरूपणम् । ज्ञानस्यात्मगुणत्वं द्रव्यत्व स्वाश्रयाय स्वयप्रकाशत्वञ्च विषयग्रहणकाले समनुवर्णितम् । तथा ज्ञानविशेषयोः भक्तिप्रपत्योश्च मोक्षप्रयोजकयो. स्वरूपविवेचन कृतम् ।

## १०—अष्टमावतार सारः—

अष्टमेऽवतारे बद्धमुक्तनित्यभेदेनत्रैविध्य जीवात्मना निरूपितम् । मुक्तभोगप्रकारश्च विस्तरतो वर्णितः ।

## ११—नवमावतार सारः—

नवमेऽवतारे ईश्वरस्य सकलजगत्कारणत्वादिना परब्रह्मत्व, श्रीमत्व नारायणत्व, सगुणत्व,साकारत्व,परत्वादिपञ्चक च वर्णितम् ।

## १२—दशमावतार सारः—

दशमेऽवतारे सत्वरजस्तमः शब्दादिपञ्चक सयोगशक्तिभेदेन दशधाऽद्रव्य निरूप्य तर्किकाभिमताना गुणान्तराणा यथायथं संयोगादावन्तर्भावा निरूपितः । कर्माऽप्येकादशमद्रव्यमिति पक्षश्चास्ति । उपसंहारे च समस्तचिदचिद्विशिष्टेऽद्वितीये परब्रह्मणि श्रीनिवास एव सकलवेदान्ततात्पर्य मित्युपवर्ण्य, भगवता बादरायणेन च ब्रह्ममीमासाया विशिष्टाद्वैतब्रह्मनिरूपणमेव प्रतिज्ञाय तस्यैवाबात सकलजगदेककारणत्व प्रथमद्विके व्यवस्थाप्य द्वितीयद्विकेन च तस्यैव मुमुक्षूपास्यत्व मुक्त प्राप्यत्वे निर्णीय विशिष्टाद्वैतसिद्धान्तः स्थापित इत्यचकथत् ग्रन्थकारो ग्रन्थेऽस्मिन्नुपसंहारे । एवं विषयसग्रह. कृतोऽध्ययनप्रवृत्ताना बुद्धिसमाधानार्थं, प्रतिपत्तिसौकर्यार्थं च ।

## १३—श्रीयतीन्द्रमतदीपिकाग्रन्थकर्तुः परिचयः—

यतीन्द्रमतदीपिकाकाराणां श्रीश्रीनिवासाचार्यस्वामिनां जन्मदेशकालावधिकृत्य किञ्चिद्विज्ञापयामः। 'इति श्रीमद्वाधूलकुलतिलके'त्यादिग्रन्थान्तिमवाक्यानुसन्धानेन श्रीवेङ्कटाद्रिपादस्थित श्रीपद (तिरुपति) क्षेत्रनिवासि श्रीगोविन्दाचार्यस्वामिना सत्पुत्रा एते ग्रन्थकाराः पञ्चविजय चण्डमारुतादि प्रचण्ड प्रबन्धप्रबन्धृ श्रीमन्महाचार्यपराभिधान वाधूल श्रीरामानुजाचार्यस्वामिपादाना साक्षादन्तेवासिन इति स्फुटमवगम्यते। श्रीमन्महाचार्याणा चावतारः रवैस्तवषोडशशताब्द्या दिनाके (१-२-१५४३) तिरोभावश्च (३-१०-१६०७) दिनांके। अतस्साक्षात्तच्छिष्याणा प्रकृतग्रन्थकृतामपि काल रवैस्तव षोडशशताब्दीपरभागः सप्तदशशताब्दी पूर्वार्धं चेति निर्णीयते।

## १४—मातृकाद्वयम्—

एतद्ग्रन्थमुद्रणावसरे च महामहिमोपाध्यायैः पद्मभूषणैः श्रीकाञ्चीप्रतिवादिभयङ्करश्रीमदण्णङ्गराचार्यस्वामि पादैर्मुद्रित मूलमात्र पुस्तकमेकम्। पुण्यपत्तन (पुना) मुद्रित प्रकाशव्याख्यासहितमूलपुस्तक मेक चेति पुस्तकद्वयमवलम्ब्य मुद्रापितोऽयं ग्रन्थोऽस्माभिः। प्रायश्च विशुद्धत्वात् परिष्कृतत्वाच्च श्रीकाञ्चीमुद्रितमूलकोशानुसारेणैव मूलपाठोऽत्र समावेशितः। तत्र तत्र पुनानगरमुद्रितपाठभेदश्च ( ) एतच्चिह्नितकोष्ठकान्त प्रदर्शितः। अस्मदीय व्याख्यासहितस्यै तद्ग्रन्थस्य मुद्रापणसमये च सशोधनादौ अस्मत्तोऽधिगत सद्विद्येन श्रीमधुसूदनाचार्येणव्याकरणवेदान्ताचार्येणास्मदन्तेवासिना श्रीभागवताचार्येण च यथोचित साहाय्यकमाचरितमिति तावेतौ शुभाशीर्भिरभिवर्धयामः। दत्तेप्यवधानेऽशुद्धयः काश्चन समापतिता अवर्जनीयाः। ताश्च विशोधनीयाः प्राज्ञैरित्यभ्यर्थयामः।

## १५—कृतज्ञताप्रकाशनम्—

एतद्ग्रन्थप्रकाशने महदार्थिक साहाय्यमाचरितवतां महता विषये सधन्यवादार्पणं कृतज्ञतां प्रकाशयन्त आत्मानमनृणीचिकीर्षामः।

श्री० उ० वे० औत्तराहजगद्गुरु अयोध्यास्थ श्रीकोसलेश सदनाध्यक्ष श्रीरामनारायण त्रिदण्डि श्रीरामानुजजीयरस्वामिभिः रु०५०१) एकाधिक पञ्चशतमुद्रा उपहारीकृता। श्री० उ० वे० वृन्दावनस्थ श्रीहरिदेवमन्दिराध्यक्षै श्रीत्रिदण्डिदेवनारायण रामानुजजीयर स्वामिभिश्च रु० २५१) एकपञ्चाशाधिक शतद्वय समर्पितम्। बम्बईस्थ सोमाणीकुलाग्रगण्यैर्भगवद्भागवताचार्य सेवापरायणैः श्रीसम्प्रदाय परिपोषणबद्धश्रद्धैः श्रीरामदयाल सोमाणी महाभागैश्च रु० ५०१) रूप्यकाणा सेवाकृता। महात्मना श्रीगोविन्दस्वामिना श्रीवैष्णवदासेन च ५१) मुद्राः समर्पिता.। एतेभ्यो महाशयेभ्यो धन्यवादसमर्पणपूर्वक मङ्गलान्याशास्महे तराम्। श्रीमदनन्तसन्देश सम्पादकै श्रीकेशवदेवशास्त्रिभि स्वप्रचालित श्रीरङ्गनाथमुद्रणालये यथासमय मुद्रापितोऽय ग्रन्थ.प्रेक्षकलोचनातिथीकृत इति तेभ्योऽपि महोदयेभ्यः मङ्गलान्याशास्महे तराम्।

## १६—याकाञ्चन सेवा—

श्रीसम्प्रदायीयसिद्धान्ततत्त्वमधिजिगमिषूणामधिकारिणा प्रथमतोऽभ्यसनीयस्य प्रबन्धस्यास्य यतीन्द्रमतदीपिकानाम्नो लघुवर्तिकानाम्नी व्याख्या श्रीसम्प्रदायस्य सेवारूपिणी विरचिताऽद्यास्माभिः भगवद्भागवताचार्यकृपा बलमवलम्ब्य। आशास्महे चानयाऽकिञ्चनजननिर्वर्तितया यया कयाचन सेवया भगवान् श्रिय पति. सहपूर्वाचार्यैः प्रसन्नो भूयादिति। अभिनन्दित चैतत्प्रकाशन श्रीगोवर्धनस्वामि प्रभृतिभिर्महनीयैरिति श्री.॥

**श्रीरङ्गजीमन्दिर**
पोस्ट–वृन्दावन
जिला–मथुरा (उ०प्र०)

**श्रीवैष्णवदासः**
विद्याभूषण तिरुनागूर
प्र० भ० अण्णंगराचार्यः
४–५–७६



॥ श्रीः ॥

॥ श्रीमते रामानुजाय नमः ॥

श्रीमद्वाधूलकुलतिलक श्रीमन्महाचार्यप्रधानशिष्य
श्रीनिवासाचार्य विरचिता

# यतीन्द्रमतदीपिका

## ॥ प्रथमोऽवतारः ॥

श्रीवेङ्कटेश करिशैलनाथ श्रीदेवराज घटिकाद्रिसिंहम् ।
कृष्णेन साकं यतिराजमीडे स्वप्ने च दृष्टान्मम देशिकेन्द्रान् ॥१॥

---

## श्रीयतीन्द्रमतदीपिकाव्याख्या लघुवर्तिकानाम्नी

न्यायव्याकरणशिरोमण्युभयवेदान्ताचार्यविद्याभूषणतिरुनांगूर
प्रतिवादिभयङ्कराण्णङ्गराचार्यविरचिता ।

जयति पुमान् पर एकः श्रुतिशतपरिगीतवैभव श्रीमान् ।
जयति च यतिराट् श्रीमान् तन्मतपद्मप्रबोधकृद्भानु ॥१॥

श्रीनागपुर्यभिजन श्रीमत्कृष्णार्यसत्सुत ।
श्रीमद्रामानुजाचार्यकृपालब्धाखिलोदय ॥२॥
जगद्गुरुवरानन्तरङ्गदेशिकयोगिनोः ।
प्रभावज्ञश्च तत्पादभक्तः कृत्यनहङ्कृतिः ॥३॥
वादिभीकृद्गुरोर्वंश्यो नानाशास्त्रकृतश्रम ॥
अण्णङ्गरार्यदासोऽहं करोमि लघुवर्तिकाम् ॥४॥
यतीन्द्रमतदीपस्य व्याख्यारूपा मनोरमाम् ।
यद्योगात् प्रोज्ज्वलःसोऽयं गूढार्थान् संप्रदर्शयेत् ॥५॥

अथ खलु तत्रभवान् विद्वद्वर्य. श्रीमन्महाचार्यमुख्यान्तेवासी श्रीनिवासाचार्य यतीन्द्रमतदीपिकानाम्नी शारीरकपरिभाषामारभमाणः इष्टदेवदेशिकस्तवन लक्षणं मङ्गलमातनोति 'श्रीवेङ्कटेशम्' इति । श्रीवेङ्कटाचलनायक भगवन्त श्रीनिवासं, श्रीकाञ्चीहस्तिगिरीश वरद देवाधिराज, चोलसिंहपुरे घटिकाचले विराजमान श्रीमन्नृसिंह, गीताचार्येण श्रीकृष्णेन सह गीताभाष्यादिभिर्विशिष्टाद्वैतसिद्धान्तप्रतिष्ठापक श्रीभगवद्रामानुजमुनिं, स्वप्न एतदहमुखे दृष्टान् एतत्प्रकरणनिर्माणार्थमादेश कुर्वाणान् स्वाचार्याश्च श्रीनिवासदासोऽहं नौमीत्यर्थः ॥१॥

यतीश्वरं प्रणम्याहं वेदान्तार्यं महागुरुम् ।
करोमि बालबोधार्थं यतीन्द्रमतदीपिकाम् ॥२॥

श्रीमन्नारायण एव [१]चिदचिद्विशिष्टोऽद्वैतं तत्त्वम्, भक्तिप्रपत्तिभ्यां प्रसन्नस्स एवोपायः, अप्राकृतदेशविशिष्टस्स एव प्राप्यः इति वेदान्तवाक्यैः प्रतिपादयतां व्यासबोधायनगुहदेवभारुचिब्रह्मनन्दिद्रमिडाचार्य श्रीपराकुशनाथयामुनमुनियतीश्वरप्रभृतीनां मतानुसारेण बालबोधनार्थं वेदान्तानुसारिणी यतीन्द्रमतदीपिकाख्या शारीरकपरिभाषा महाचार्यकृपावलम्बिना मया यथामति सङ्ग्रहेण प्रकाश्यते ।

---

'**यतीश्वर**'मिति । विविधप्रबन्धमुखेन विशिष्टाद्वैत सिद्धान्तप्रतिष्ठापकानाचार्यचरणान् श्रीमद्भाष्यकारश्रुत्यन्तदेशिकमहाचार्यान् प्रणम्याहमेतत्तत्वानभिज्ञाना तत्वजिज्ञासूनाकृते यतीन्द्रमतदीपिका करोमीत्यर्थः। एतेनैतत्सिद्धान्तसिद्धमानमेयरूपो विषय, तज्जिज्ञासुरधिकारी, एतन्मततत्वावबोधलक्षणं साक्षात् फल च स्वप्रबन्धस्य निरदिश्यन्त । परम्परया निःश्रेयसानुबन्धित्व चास्य विद्यत इति हार्दम् ॥२॥

तत्र तावत् तत्त्वहितपुरुषार्थान् सगृह्णाति '**श्रीम**' दिति । चिदचित्प्रकारविशिष्टः श्रीमन्नारायण एवाद्वैतम्—एक तत्वमित्यर्थः । द्वयोर्भावो द्विता-द्वित्वम् । द्वितैव द्वैतम् । नास्ति द्वैत यस्मिन्, तदद्वैतम् । चिदचितोरपृथक्सिद्धविशेषणत्वेन ब्रह्मण्यन्तर्भूतत्वात् विशिष्टमेकमेव तत्त्वमित्यर्थः । स. श्रीमान् नारायण एव, उपाय –मोक्षप्रापकः । परमे पदे श्रीवैकुण्ठे विराजमानः स एव परवासुदेवाख्य. मुक्तप्राप्य इति तत्वादित्रयसङ्ग्रह । '**व्यास**' इत्यादि । व्यासादयोऽमी विशिष्टाद्वैतमतस्य प्रतिपादकाः परिपोषकाः प्रतिष्ठापकाश्च मता यथायथम् । तत्र व्यासो-ब्रह्ममीमांसादिप्रणेता। बोधायनो ब्रह्मसूत्रेषु वृत्तिकार. । गुहदेवो वेदभाष्यकर्ता, श्रौतसूत्रव्याख्याता च । भारुचिश्च विष्णुस्मृतिव्याख्यातेति विमर्शकुशला प्राहु । ब्रह्मनन्दि. टङ्काचार्यः छान्दोग्यस्य वाक्यनामक व्याख्याकार. । द्रमिडाचार्यो वाक्यस्य भाष्यकृत् । श्रीपराकुशमुनिर्दिव्यप्रबन्धाविष्कर्त्ता श्रीमन्नाथमुनेर्योगे दिव्यरूपत. सिद्धान्तरहस्योपदेशकश्च। श्रीमन्नाथमुनि न्यायतत्वशास्त्रादिप्रणेता। श्रीमद्या

---

१—चिदचिद्विशिष्टाद्वैततत्त्वम् ।

सर्वं पदार्थजातंप्रमाणप्रमेयभेदेन द्विधा भिन्नम् । प्रमाणानि त्रीण्येव । प्रमेय द्विविधम्, द्रव्याद्रव्यभेदात् ॥ द्रव्यं द्विविधम्, जडमजड चेति । जडं च द्विविधम्, प्रकृतिः कालश्चेति । प्रकृतिश्चतुर्विंशतितत्त्वात्मिका । कालस्तु उपाधिभेदेन त्रिविधः । अजडं तु द्विविधम्,पराक् प्रत्यक्चेति । परागपि द्विधा-नित्यभूतिः धर्मभूतज्ञानं चेति । प्रत्यगपि द्विविध.–जीवेश्वरभेदात्। जीवस्त्रिविधः-बद्धमुक्तनित्यभेदात् । बद्धोऽपि द्विविध.-बुभुक्षुमुमुक्षुभेदात् । बुभुक्षुः द्विविधः–अर्थकामपरो धर्मपरश्चेति । धर्मपरो द्विविध.–देवतान्तरपरो भगवत्परश्चेति । मुमुक्षुः द्विविधः–कैवल्यपरो मोक्षपरश्चेति । मोक्षपरो द्विविधः–भक्त.प्रपन्नश्चेति । प्रपन्नश्च द्विविध –एकान्ती परमैकान्ती चेति । परमैकान्तो द्विविधः, दृप्तार्तभेदात् ।

---

मुनमुनि. सिद्धित्रयादिकर्ता । यतीश्वर श्रीमद्भगवद्रामानुजमुनि श्रीभाष्यादिकृत् इति अनुसन्धेयम् ।

'त्रीण्येवे'ति । 'प्रत्यक्षानुमानशब्दभेदादित्यर्थ. । 'त्रिविध' इति । भूतभविष्यद्वर्तमानभेदात् कालस्त्रिविध इत्यर्थः ।

अजडम्—स्वयं प्रकाशं द्रव्यम् । पराक्-परस्मै स्वय भासमान परागत्र विवक्षितम् । प्रत्यक्-स्वस्मै स्वय भासमानम् । परस्मै परत एव भासमान पराग्वस्तु जडमिति विवेक । मुमुक्षुः–प्रकृतिबन्धविमोचनेच्छुः । कैवल्यपरः—प्रकृतिबन्धविनिर्मुक्तस्वात्मानुभवेच्छु. । मोक्षपरः—बन्धनिवृत्तिपूर्वकपरमानन्दपरब्रह्मानुभवेच्छु । प्रपन्नः—भगवन्तमेवशरणमुपगत. ।

एकान्ती-भगवत एव मोक्षमैहिकं च फल कामयमान. अनन्यदैवत इति यावत् । परमैकान्ती—भगवत एव तदनुभवसेवातदुपकरणातिरिक्तं किमपि फलमकामयमान. । दृप्तः—वर्तमानदेहधारणक्षम:, देहान्तरान्वयासहिष्णु, । आर्तः—वर्तमानदेहसम्बन्धमप्यसहमानो भगवत्प्राप्तावुत्कटत्वरावान् ।

ईश्वर. पञ्चधा—परव्यूहविभवान्तर्याम्यर्चावतारभेदात् । पर एकधा । व्यूहश्चतुर्धा वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धभेदात् । केशवादि व्यूहान्तरमत्रैवान्तर्भवति । मत्स्यादयो विभवा पुनरनन्ता । अन्तर्यामी प्रतिशरीरमवस्थित: । अर्चावतारस्तु श्रीरङ्गवेङ्कटाद्रिहस्तिगिरियादवाद्रिघटिकाचलादिषु सकल-मनुजनयनविषयतां गतो मूर्तिविशेष. ॥ अद्रव्य तु सत्त्वर-जस्तमश्शब्दस्पर्शरूपरसगन्धसंयोगशक्तिभेदाद्दशधैव ।

एवमुद्दिष्टानामुद्देशक्रमेण लक्षणपरीक्षे क्रियेते । तत्र, प्रमाकरणं प्रमाणं । प्रमाणं लक्ष्यम् । प्रमाकरणत्व लक्षणम् । यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा । प्रमा—लक्ष्यम् । यथा-वस्थितव्यवहारानुगुणज्ञानत्वं—लक्षणम् । ज्ञानं प्रमेत्युक्ते शुक्ति-कायामिद रजतमिति ज्ञानेऽतिव्याप्तिः । अत उक्तं व्यवहारा-नुगुणमिति । एवमपि तत्रैवातिव्याप्तिः—भ्रान्तिदशायामिद रजतमिति व्यवह्रियमाणत्वात् । अत उक्तं यथावस्थितेति । यथावस्थितपदेन संशयान्यथाज्ञानविपरीतज्ञानव्यावृत्तिः । धर्मिग्रहणे मिथो विरुद्धानेकविशेष (स्म) स्फुरण संशय । यथा ऊर्ध्वताविशिष्टे (धर्मिणि)स्थाणुर्वा पुरुषो वेति ज्ञानम् ।

---

**'विभवा'** इति । देवमनुष्यादिस्वविभूतिसजातीया भगवतोऽवतारा उपेन्द्ररामकृष्णादिका विभवा इत्यर्थः । **'एव'**मिति । नाम्ना पदार्थसङ्कीर्तनमुद्देशः । असाधारणधर्मो लक्षणम् । परीक्षा-लक्ष्यस्य लक्षणमुक्तं संभवति न वेति विचार । **'यथावस्थिते'**ति । व्यवहारो वाचिकः कायिकश्चेति द्विविधः । व्यवहारे यथावस्थितत्व विनियोगयोग्यार्थविषयकत्वम् । विनियोग. प्रेप्सितार्थोपयोगः । शुक्तौ तु रजतं सदपि न विनियोगार्हम् । **'यथावस्थितपदेने'**ति । अव्यव-स्थित व्यवहारहेतोः सशयस्य, अयथाव्यवहारहेतोरन्यथाज्ञानादेश्च-व्यावृत्तिरित्यर्थ. । सशयलक्षणमाह—**'धर्मी'**ति । साधारणाका-रेण धर्मिग्रहे तदुपस्थापितमिथोविरुद्धनानाकोटिस्फुरण सशय इत्यर्थः ।

अन्यथाज्ञानं नाम धर्मविपर्यास. । यथा, कर्तृत्वेन भासमाने आत्मनि कुयुक्तिभिः कर्तृत्वस्य भ्रान्तत्वोपपादनम् । विपरीतज्ञानं नाम धर्मिविपर्यासः । यथा वस्तुनो वस्त्वन्तरज्ञानम् । लक्षणस्य त्रीणि दूषणानि सन्ति, अव्याप्तिरतिव्याप्तिरसम्भवश्चेति । लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्ति । लक्ष्यादन्यत्र वर्तमानत्वमतिव्याप्ति. । लक्ष्ये क्वाप्यवर्तनमसम्भव । यथा जीवो गुणत्रयवश्य इत्युक्ते अव्याप्ति', ज्ञानगुणक इत्युक्ते अतिव्याप्तिः, चक्षुर्विषयो जीव इत्युक्ते ऽसम्भव एव । अत्रोक्तदूषणत्रयाभावात प्रमाणलक्षणं सुस्थम् । साधकतमं करणम् । अतिशयित साधक साधकतमम् । यस्मिन् सत्यविलम्बेन (कार्यं) ज्ञानमुत्पद्यते तदतिशयितमित्युच्यते । तेन प्रमाकरण प्रमाणमिति सिद्धम् ।

---

तार्किकमतवत् सिद्धान्ते सशयो नैक ज्ञान मतम् । किंतु धर्मिग्रहण कोटिद्वयप्रतीतिश्चेति ज्ञानद्वयम्। दोषाद्भेदाग्रहणेन सहित तदेवायं स्थाणुर्वा पुरुषो वेत्यनवस्थित व्यवहारहेतुर्भवतीति स्वीकृतम्। धर्मविपर्यास –अन्यदीयधर्मस्य धर्म्यन्तरेभानम् । आत्मनि कर्तर्यकर्तृत्व ज्ञानमन्यथाज्ञान. सिद्धान्ते कर्तृत्वस्वीकारादात्मन· )। '**कुयुक्तिभिः**' साख्यादिदुस्तर्कैः । '**भ्रान्तत्वोपपादनम्**–आत्मनि कर्तृत्वस्य भ्रमसिद्धत्वोपपादनम् । **वस्त्वन्तरे** ति भावप्रधानो निर्देश. । वस्त्वन्तरत्वज्ञानमिति यत्वत् । धर्मिस्वरूपनिरूपकधर्मस्यान्यत्र धर्मिण्यध्यासो विपरीतज्ञानम्, यथा शुक्तौ रजतमिति, देहे आत्मेतिच । तद्भिन्नधर्मस्याध्यासोऽन्यथाज्ञानम्, यथा शङ्खः पीतः, इति । आत्माऽकर्तेतिच । '**यथा जीव**' इति । गुणत्रयवश्यत्वं जीवात्मलक्षणं नित्यमुक्तेष्वव्याप्तम् । लक्ष्यैकदेशावृत्तित्वमव्याप्ति· । ज्ञानवत्त्व जीवात्मनां लक्षणमीश्वरेऽतिव्याप्तम् । लक्ष्यालक्ष्यवृत्तित्वमतिव्याप्तिः। चक्षुर्ग्राह्यत्वं चेदात्मनां लक्षणमुच्यते,तर्ह्य सम्भव । लक्ष्यसामान्ये ऽवर्तमानत्वमसम्भवः। एतद्दोषत्रयरहितोधर्मो लक्षण भवति । असाधारणधर्मो लक्षणमिति यावत् । लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् । तच्च स्वव्यापकलक्ष्यतावच्छेदक व्यापकत्वम् । स्व-लक्षणम् । जीवात्मना शेषचेतनत्व लक्षणं साधु ।

अनधिगतार्थगन्तृ प्रमाणमित्यादिकं तु तत्तद्वादिभिरेव निरस्तत्वादनादरणीयम् ॥ तानि प्रमाणानि प्रत्यक्षानुमान-शब्दाख्यानि त्रीण्येव । तत्र साक्षात्कारिप्रमाकरणं प्रत्यक्षम् । अनुमानादिव्यावृत्त्यर्थं साक्षात्कारीति । दुष्टेन्द्रियजन्यव्यावृत्त्यर्थं प्रमेति । तच्च प्रत्यक्षं द्विविधं–निर्विकल्पकसविकल्पकभेदात् । निर्विकल्पकं नाम गुणसंस्थानादिविशिष्टप्रथमपिण्डग्रहणम् । सविकल्पकं तु सप्रत्यवमर्शं गुणसंस्थानादिविशिष्टद्वितीयादिपिण्डग्रहणम् । उभयमप्येतद्विशिष्टविषयमेव । अविशिष्टग्राहिणो ज्ञानस्यानुपलम्भादनुपपत्तेश्च । ग्रहणप्रकारस्तु–आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन । इन्द्रियाणां प्राप्यकारित्वनियमात् । अतो घटादिरूपार्थस्य चक्षुरादी(चक्षूरूपे)न्द्रियस्य च संनिकर्षे सति अयं घट पट इति चाक्षुषज्ञानं जायते । एवं स्पार्शनप्रत्यक्षादयोऽपि॥ द्रव्यग्रहणे संयोगस्संबन्ध । द्रव्यगतरूपादिग्रहणे समवायानङ्गीकारात् संयुक्ताश्रयणं संबन्ध । निर्विकल्पकसविकल्पकभिन्नं प्रत्यक्षं द्विविधम्, अर्वाचीनमनर्वाचीनं चेति । अर्वाचीनं पुनर्द्विविधम्–इन्द्रियसापेक्षं तदनपेक्षं चेति । तदनपेक्षं द्विविधम्–स्वयंसिद्धं दिव्यं चेति । स्वयंसिद्ध–योगजन्यम्, दिव्यं भगवत्प्रसादजन्यम् अनर्वाचीनं तु,इन्द्रियानपेक्षं नित्यमुक्तेश्वरज्ञानम् । अनर्वाचीनं प्रसङ्गादुक्तम् । एवं साक्षात्कारिप्रमाकरणं प्रत्यक्षमिति सिद्धम् ।

---

अनधिगते ति । अज्ञातार्थज्ञानजनकं प्रमाण-प्रमाकरणमित्यर्थ । यद्वा प्रमाणमिति भावल्युडन्तम् । गन्तृ-गमकं, प्रकाशकम् । अज्ञातार्थप्रकाशकं ज्ञानं प्रमेत्यर्थ. । सौगताद्यभिमतमज्ञातार्थज्ञानं प्रमेति लक्षणं स्मृतौ धारावाहिकद्वितीयादिज्ञाने चाव्याप्तम् । अपरोक्षानुभवं प्रमेति चानुमित्यादावव्याप्तमिति बोध्यम् । साक्षात्कारि–लौकिकविषयिनाशालि, विशदावभासात्मकम्, यद्वा अनुमिति-

ननु यथावस्थितव्यवहारानुगुण ज्ञान प्रमेत्युक्तम्, एव च स्मृतेरपि यथावस्थितव्यवहारानुगुणज्ञानत्वेन प्रामाण्यात् स्मृतेरपि प्रमाणत्वेन परिगणनाच्च त्रीण्येव प्रमाणानीति कथं प्रतिपाद्यत इति चेन्; उच्यते, स्मृतेः प्रामाण्याङ्गीकारेऽपि संस्कारसापेक्षत्वात्तस्या प्रत्यक्षमूलत्वान्मूलभूते प्रत्यक्षेऽन्तर्भाव इति न पृथक्प्रमाणत्वकल्पनम् । अत प्रमाणानि त्रीण्येवेति संभवति। स्मृतिर्नाम पूर्वानुभवजन्यसस्कारमात्रजन्य ज्ञानम् । तत्रचोद्बुद्धस्सस्कारो हेतुः । संस्कारोद्बोधश्च *सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः * इत्युक्तप्रकारेण क्वचित्सदृशदर्शनाद्भवति, क्वचिददृष्टात्, क्वचिच्चिन्तया । आदिशब्देन साहचर्यस्यापि ग्रहणात् तेनापि भवति । सादृश्यजा यथा, देवदत्तयज्ञदत्तयोस्सदृशयोर्देवदत्त दर्शनेन यज्ञदत्तस्मृतिः । द्वितीया यथा, यादृच्छिककालान्तरदेशान्तरानुभूत श्रीरङ्गादिदिव्यदेशस्मृति । तृतीया यथा, चिन्त्यमाने सति श्रीवेङ्कटेशस्य कमनीयदिव्यमङ्गलविग्रहस्मृति । चतुर्थी तु, सहचरितयोः देवदत्तयज्ञदत्तयोर्मध्येऽन्यतरदर्शनेन तदन्यतरस्मृतिः। सम्यगनुभूतस्य सर्वस्य स्मृतिविषयत्वनियम । क्वचित्काल दैर्घ्यात् व्याध्यादिना वा सस्कारस्य प्रमोषात् स्मृत्यभाव ।

---

त्वशाब्दत्वस्मृतित्वरहितम् (ज्ञानम्) । **सप्रत्यवमर्श'** मिति । सप्रतिसन्धानमित्यर्थः । तत्तोल्लेखीतिवा । **अनुपपत्ते** –केनचिद्धर्मेण विनावस्तुनो ग्रहणायोगात् । **प्राप्यकारित्वे**ति । सम्बध्यार्थेन तत्प्रकाशरूपकार्यकरत्व मिन्द्रियाणामिति नियमादित्यर्थ. । संयुक्ताश्रयणम् इन्द्रिय सयुक्तद्रव्याश्रितत्वम् । योग्येऽर्थेइन्द्रियसन्निकर्षः प्रत्यक्षहेतुः इति च बोध्यम् । अर्वाचीन जन्यम् । अनर्वाचीनमजन्यम् । प्रसङ्गादिति । जन्यप्रत्यक्षस्यैवप्रमाणनिरूपण प्रकृतम् । अजन्यस्यतु प्रत्यक्षस्य स्मृतस्योपेक्षानर्हत्वादत्र निर्देशः कृत इत्यर्थ ।

**'परिगणना'** दिति । 'स्मृतिः प्रत्यक्षमैतिह्यमनुमान, चतुर्विधम् प्रमाण' मिति वचन इति शेषः । प्रमाणशब्दस्तन्त्रेण प्रमातत्करणो-

यथा स्मृतेः प्रत्यक्षेऽन्तर्भाव, एव सोऽयं देवदत्त इति प्रत्यभिज्ञाया अपि प्रत्यक्षेऽन्तर्भाव । अस्मन्मते अभावस्य भावान्तररूपत्वात् तज्ज्ञानस्यापि प्रत्यक्षेऽन्तर्भावः । भूतले घटात्यन्ताभावो भूतलमेव । घटप्रागभावो नाम मृदेव । घटध्वसश्च कपालमेव । प्राय पुरुषेणानेन भवितव्यमित्येतदूह । पुर किसज्ञकोऽयं वृक्ष इत्यनध्यवसायो ज्ञान सशय उक्त । एतयोरपि प्रत्यक्षेऽन्तर्भाव । पुण्यपुरुषनिष्ठा प्रतिभाऽपि प्रत्यक्षेऽन्तर्गता । [* यथार्थ सर्वविज्ञानमिति वेदविदा मतम् * इत्युक्तत्वात् भ्रमादिप्रत्यक्षादिज्ञानं यथार्थमेव ।

---

भयवान्वी भवति । प्रमाकरणस्य प्रमाणत्वे प्रमा तत्फल भवति । प्रमायास्तथात्वे चार्थपरिच्छित्ति र्हानोपादानादिर्वा फल भवति । अर्थपरिच्छित्ति र्नाम हेयोपादेयादिविवेकः । 'तस्या' इति । स्मृते प्रत्यक्षमूलकत्वात् इत्यर्थ । प्रत्यक्षस्यैव सस्कारजनकत्वम्, सस्कारद्वारा स्मृतिहेतुत्वं चेति केषाञ्चित्पक्ष स्यादित्यूह्यत एतत्संदर्भतः । यद्वा दृष्टघटादिस्मृतिमभिप्रेत्य तस्या मूलभूते प्रत्यक्षेऽन्तर्भाव कथितोऽत्र । प्रत्यक्षशब्दश्चाय पूर्वानुभवमात्रस्य स्मृतिहेतोरुपलक्षको बोध्य. । ऐदम्पर्येणश्च तस्याप्यर्थस्य सस्कारात्स्मृतेर्दर्शनात् । 'संस्कारमात्रे' ति । इन्द्रियार्थसनिकर्षाजन्य सस्कारजन्य ज्ञान स्मृतिरित्यर्थ. । 'स्मृतिबीजस्येति स्मृतिहेतुसस्कारस्योद्बोधका इत्यर्थ.। चिन्ताद्या इत्याद्यपदेन सहच' रितस्य ग्रहणम् । अत्र सदृश सहचरितयो प्रतीयमानयोः सस्कारोद्बोधकत्व बोध्यम् । चिन्ता-पर्यालोचनविचार. । 'यथास्मृते' रिति ।

स्मृतिप्रामाण्यस्य तन्मूलप्रत्यक्षरूपपूर्वानुभवप्रामाण्याधीनत्वात्स्मृति प्रमाणस्यमूलभूते प्रत्यक्षएवा न्तर्भाव इत्यर्थ । प्रत्यभिज्ञा सस्कारसहकृतेन्द्रियसन्निकर्षजन्य ज्ञानम्, तच्च प्रत्यक्षेऽन्तर्भूतम् । अभावग्राहिकाऽनुपलब्धि प्रमाणान्तरमिति भाट्टादीनां मत निरस्यन्नाह 'अस्मन्मत' इति । घटवत्तयाऽगृह्यमाण स्वरूपतो गृह्यमाण भूतलमेवघटाभाव व्यवहार हेतुस्तत्र । अग्रहश्च ज्ञानस्यावस्थाविशेष । मृदेव-मृत्पिण्डावस्थैव । कपालमेव-कपालावस्थैव । भेदो घटपटयोस्तत्तत्सस्थानलक्षण एव । एवमभावस्य भावान्तरत्वात् प्रत्यक्षेणैव तद्ग्रह

अख्यात्यात्मख्यात्यनिर्वचनीयख्यात्यन्यथाख्यात्यसत्ख्यातिवादिनो निरस्य सत्ख्यातिपक्षस्वीकारात् । सत्ख्यातिर्नाम ज्ञानविषयस्य सत्यत्वम् । तर्हि भ्रमत्व कथमिति चेत्, विषयव्यवहारबाधात् भ्रमत्वम् । तदुपपादयामः । पञ्चीकरणप्रक्रियया पृथिव्यादिषु सर्वत्र सर्वभूतानां विद्यमानत्वात् अत एव शुक्तिकाया रजतांशस्य विद्यमानत्वाज्ज्ञानविषयस्य सत्यत्वम् ।

---

सम्भवतीति नाभावग्राहक प्रमाणान्तर कल्पनीयमित्याशय । **'एतयो'** रिति । ऊहानध्यवसाययोरिन्द्रियसन्निकृष्टार्थविषययोः प्रत्यक्षेऽन्तर्भाव इत्यर्थ । प्रतिभा प्रकृष्टादृष्टजन्यमानसप्रत्यक्षात्मिकेति बोध्यम् ॥

**'यथार्थ'** मित्यादि श्रीभाष्ये । **'सत्ख्याती'** ति । श्रीभाष्ये भ्रान्तिस्थले सत्ख्याति. समर्थिता ख्यात्यन्तरवादिनो निरस्य । अख्याति गुरुमते । इदमिति रजतमिति च ज्ञानद्वयम् । दोषाज्ज्ञानतद्विषययोर्भेदाग्रहादिदं रजतमिति व्यवहारस्ततो भवतीति गुरुमतम् । योगाचारमत आत्मख्याति., चिन्मात्रात्मैव वासनातो नानार्थाकारेण भासत इति । मायिना मतेऽनिर्वचनीय ख्याति', इदमवच्छिन्ने चैतन्येऽज्ञानात्तत्कालोत्पन्न सदसद्भ्यामनिर्वचनीय रजतादि गृह्यत इति । अन्यथाख्यातिस्तार्किकाणाम् । सादृश्यादुपनीतस्यान्यधर्मस्य पुरोवर्तिनि भान दोषादिति । एतन्मते त्वेक ज्ञानं तदभाववति तत्प्रकारक मन्यते । असत्ख्याति. माध्यमिकानाम्, सवृत्याऽसदेव सर्वं सद्वाऽसत इति । एतेषा वादिना निरासो न्यायपरिशुद्धयादौ विस्तरतोऽनुसन्धेयः।

एतावदत्रब्रूम —ज्ञातृज्ञेयज्ञानाना भेदस्याहमिदंजानामीत्यबाधितप्रतीतिसिद्धतया सत्यत्वादात्मख्यात्यसत्ख्यातिवादयो र्नावकाश । अनिर्वचनीयस्य निर्वचनीयत्वेन भानमन्तरा व्यवहारस्यायोगादन्यथा ख्यातेरवर्जनीयत्वादनिर्वचनीयस्योत्पत्तेरयोगाच्चानिर्वचनीय ख्यातेरप्यनिर्वचनीयता । अन्यथाख्यातिपक्षे स्वारस्यम् । अख्यातिपक्षे तु लाघवम् । अतोऽख्यातिसहिता सत्ख्यातिरुपगता भ्रान्तिस्थले सिद्धान्तिभिरिति ।

शुक्तिरूप्यभ्रमे सत्ख्यातिंतावदुपपादयति **'पञ्चीकरणे'** ति । अत एव-भूतेषु भूतान्तरांशसंमिश्रणादेव । दोषाच्छुक्त्यंशाग्रहसहित विद्यमानसूक्ष्मरजतांशग्रहणभवति । तस्य व्यवहारायोग्यत्वाग्रहश्च दोषा-

तत्र रजतांशस्य स्वल्पत्वात्तु न व्यवहार इति तद्बाधात्तज्ज्ञानं भ्रम । शुक्त्यंशभूयस्त्वज्ञानात् भ्रमनिवृत्तिः । स्वप्नादिज्ञान तु सत्यमेव । तत्तत्पुरुषानुभाव्यतया तत्तत्कालावसानान्रथादीन् परमपुरुष सृजतीति हि श्रुत्याऽवगम्यते । पीतश्शङ्ख इत्यादौ नयनवर्तिपित्तद्रव्यसंभिन्ना नायनरश्मयश्शङ्खादिभिस्सयुज्यन्ते । तत्र पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते । अतस्सुवर्णानुलिप्तशङ्खवत्पीतश्शङ्ख इति प्रतीयते । सूक्ष्मत्वात्पीतिमा स्वनयननिष्क्रान्ततया स्वेनैव गृह्यते । नत्वन्यैः । जपाकुसुमसमीपवर्तिस्फटिकमणिरपि रक्त इति गृह्यते । तज्ज्ञानं सत्यमेव । मरीचिकायां जलज्ञानमपि पञ्चीकरणप्रक्रियया पूर्वोक्तवदुपपद्यते । पञ्चीकरणप्रक्रियातूत्तरत्र

---

देव । अतस्सत्ख्यातिरिद रजतमिति । तर्हि भ्रमत्वंकथमस्ये त्यत्राह '**तत्रे**' ति । न व्यवहार–न रजतसाध्यकार्यकरणम् । तद्बाधात्–व्यवहारबाधात् । बाधितव्यवहारहेतुर्ज्ञानंभ्रम । रूप्यस्य सूक्ष्मस्य सतोऽपि रूप्यकार्यकरणाक्षमत्वात् तज्ज्ञानस्य शुक्तिकाया बाधितव्यवहारहेतुत्वाद्भ्रमत्वमिति भाव । '**शुक्त्यंशे**' ति । इय शुक्ति रिति भूयश्शुक्त्यशग्रहणात् शुक्तिरूप्यभ्रमकृतव्यवहारनिवृत्ति । शुक्तिभूयस्त्वज्ञानेन तद्गतरजतस्य व्यवहारायोग्यत्वनिर्णय एव शुक्तिरूप्यबाध इत्यर्थ । '**श्रुत्या**' इति । 'न तत्र रथा.×× पथः सृजते, स हि कर्ता' (बृ.) इति श्रुति. स्वाप्नार्थस्रष्टारं परमात्मान माह । अत स्वाप्नज्ञानस्य सत्ख्यातित्वम् । बाह्यव्यवहारायोग्यत्वाच्च तदर्थस्य मिथ्यात्व क्वचिदुच्यते । '**पीत**' इति । सभिन्ना. सश्लिष्टा. । शङ्खः पीतिमाच सन्नेव गृह्येते । पीतिम्नाऽभिभूतत्वाच्छङ्खश्वेत्यस्याग्रह । तयोरससर्गाग्रहो दोषात् । तत एव पीतः शङ्ख इति बाधितो व्यवहार इति भावः । '**जपे**'ति । स्फटिके जपाकुसुमरक्तकान्ते प्रतिफलनाद्रक्तप्रतीतिः । सतोरेव स्फटिक रक्तयोर्दोषादससर्गाग्रहः । अत एव रक्तः स्फटिक इति व्यवहारो बाधितो भवति । '**मरीचिके**' ति । सूर्यातपेऽम्भः सदेव भासते । पञ्चीकरणात् । पर तूदन्याशमनायोग्यत्वात्तस्य तृषितस्य तत्र पानार्थप्रवृत्तिर्बाधिता भवति । अतो मरीचिका-

वक्ष्यते । दिग्भ्रमोऽपि तथैव । दिशि दिगन्तरस्य विद्यमान-त्वात्,अवच्छेदकमन्तरेण दिगिति द्रव्यान्तरानङ्गीकाराच्च । अलातचक्रादौ तु अतिशैघ्र्यात् तदन्तरालाग्रहणात्तत्तद्देश-मयुक्ततत्तद्वस्तुन एव चक्राकारेण ग्रहणम् । तदपि सत्यमेव । दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था । दर्पणादिप्रति-हतगतयो नायनरश्मयो दर्पणादिग्रहणपूर्वक निजमुखादि गृह्णन्ति । तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिः । द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभे-देन सामग्रीभेदात् सामग्रीद्वयमन्योन्यनिरपेक्ष द्विचन्द्रग्रहण-हेतुर्भवति । सामग्रीद्वय पारमार्थिकम् । तेन द्विचन्द्रज्ञान भवति । अतः सर्वं विज्ञान सत्यं सविशेषविषय च । निर्वि-शेषवस्तुनोऽग्रहणात् । एवभूत प्रत्यक्षं प्रथमतो (जात्यादिरूप)

---

जलज्ञान भ्रम उच्यत इति भाव. । **'दिशी'** ति । दिग्भ्रमे उत्तरस्या दिशि पूर्वत्व गृहीत सदेव । तस्या एवान्यपुरुषापेक्षया पूर्वत्वात् । भ्रान्तपुरुषापेक्षयोत्तरत्वाग्रहस्तस्य दोषात् । तत एव तस्य स्वपूर्वत्वव्यवहारस्तत्र भवति । स च बाधित इत्यर्थ.। वस्तुत सिद्धान्ते न दिक् तत्वान्तरमित्याह **'अवच्छेदक'**मिति–अवच्छेदकमुदयाचलसयुक्तमूर्तादि । तत्तदुपाध्यवच्छिन्नाकाशादेव पूर्वा-दिव्यवहारो भवतीति भाव । एतद्विवरणमाकाशनिरूपणे । **'अलाते'** ति । अर्धाग्रदग्धकाष्ठादि परिभ्राम्यमाण मलातचक्रमुच्यते । तदन्त-रालम्–तत्तद्देशसयोगस्य क्षण व्यवधानम् । द्रुत परिभ्रामणादन्तराला-ग्रहणम् । तत्सहित तत्तद्देशसंयुक्तालातग्रहणमलातचक्रव्यवहारहेतु-रिति भाव. । **'दर्पणे'**ति । ऋजुप्रवृत्तनेत्ररश्मिसयोगजनित दर्पणग्रहण, दर्पण प्रतिहत प्रतिलोमगतितद्रश्मिसंयोगजनित मुखग्रहणयो. क्षण-व्यवधानस्य शैघ्र्यादग्रहणात् दर्पणमुखग्रहण भवति दर्पण मुखवदिति बाधित व्यवहारहेतुः । दर्पणप्रतिहतिरूप नेत्ररश्मिदोषत एव प्रति-हतनायन रश्मिग्राह्य मुखादि प्रतिघातकदर्पणादिगतमिव प्रतीत व्यवह्रियते । दोषस्वभावविशेषोऽयम् इति बोध्यम् ॥

भेदविशिष्टमेव गृह्णाति। भेद इति व्यवहारे तु प्रतियोग्य-पेक्षा, न तु स्वरूपे(ण)। तेनानवस्थाऽन्योन्याश्रयदोषोऽपि नास्ति। उपर्युपर्यपेक्षाऽनवस्था। परस्परापेक्षा अन्योन्याश्रयः॥

ननु, दशमस्त्वमसीत्येतदपि प्रत्यक्ष किं न स्यादिति चेन्न। त्वमित्येतस्य प्रत्यक्षत्वेऽपि दशमोऽसीत्येतस्य वाक्यजन्यत्वात्। यदि दशमोऽसीत्यस्य(प्रत्यक्षत्व)प्रत्यक्षविषयत्व तर्हि धर्मवांस्त्वमसीत्येतस्यापि प्रत्यक्षत्वं स्यात्। अङ्गीकारेऽति-

---

'द्विचन्द्रे'ति। तिमिरदोषेणाक्षिणिअङ्गुल्यवष्टम्भेन वा नेत्ररश्मेर्गतिभेदो जायते। तत्र ऋजुगतिकरश्मिना स्वदेशस्थचन्द्रग्रहण यथार्थ भवति। वक्रगतिना तु तेन चन्द्रसमीप देशग्रहणपूर्वक स्वदेशवियुक्तचन्द्रमात्रग्रहणं भवति। तत्र क्षणभेदस्य शैघ्र्याचादप्रतीतेर्वारद्वय चन्द्रग्रहण द्विचन्द्रव्यवहारहेतुर्भवति। दोषनिवृत्तौ तु द्विवारं चन्द्रग्रहणस्याभावेन स व्यवहारो निवर्तते। एव भ्रान्तिस्थलेषु सत्ख्याति भ्रान्तित्वं च समर्थितम्। अत.–सत्ख्याते. समर्थितत्वात्। सत्यं–स्वरूपतो विषयतश्च सत्यम्। 'भेदे'ति। गोत्वादिसस्थानस्यैवाश्वादितादात्म्यधीविरोधिज्ञानविषयत्वेनाश्वादिभेदरूपत्वात्तद्ग्रहणे न प्रतियोगिज्ञानापेक्षा। अयमश्वाद्भिन्न इति व्यवहार विशेषे पुनस्तदपेक्षेति भावः। 'तेने'ति। सस्थानस्यैवभेदत्वेन, जातिभेदयोर्भिन्नत्वे यो दोष. प्रसक्तः, अस्मत्पक्षे स न भवतीत्यर्थः। तज्जातीयत्वग्रहणे परस्माद्भेदग्रहण, भेदग्रहणे च तज्जातीयत्वग्रहणमित्यन्योन्याश्रय.। भेदस्यातिरिक्तत्वे तस्यापि स्वधर्मितो भेदोऽतिरिक्तः। एवं तद्भेदस्यापीत्यनवस्थापरमते। स्वज्ञप्त्यधीनज्ञप्त्यधीनस्वज्ञप्तिकत्वमन्योन्याश्रयः। अप्रामाणिकपदार्थकल्पनापरम्पराऽनवस्था। सस्थानस्यैवस्वपर निर्वाहकत्वं सिद्धान्तेऽभ्युपगम्यत इति नानवस्थादि प्रसङ्ग इति बोध्यम्।

वाक्यजन्यमपि प्रत्यक्षमस्तीति मत निरस्यति 'ननु' इत्यादिना। दशमस्त्वमिति वाक्येनाह दशमोऽस्मीति ज्ञानं जायते। अहमर्थस्य प्रत्यक्षत्वात्तद्विषयमिद ज्ञान प्रत्यक्षमिति पूर्वपक्ष्याशय। अह-

प्रसङ्गात् । अत एव * तत्त्वमसीति वाक्यस्य नापरोक्षज्ञान-जनकत्वम् । एतेन—प्रत्यक्षप्रमाकरण प्रत्यक्षप्रमाणम् । प्रमा ( चात्म ) चात्र चैतन्यमेव । चैतन्यं च त्रिविधम् । अन्तः करणावच्छिन्नचैतन्यं, वृत्त्यवच्छिन्नचैतन्यं, विषयावच्छिन्नचैतन्यं चेति । यदा त्रयाणामैक्यं तदा साक्षात्कारः । तदपि निर्विशेषविषयमेव अभेदमेव गृह्णातीत्यादि-कुदृष्टिकल्पना निरस्ता । निर्विकल्पक तु नामजात्यादियोज-नाहोनं वस्तुमात्रावगाहि किञ्चिदिदमितिज्ञानमिति नैयायि-कानां मतमपि निरस्तम् ।

---

मर्थस्य प्रत्यक्षत्वेऽपि दशमत्वविशिष्टाहमर्थविषयमेतद्वाक्यजन्य ज्ञान परोक्षमेव । दशमत्वस्येन्द्रियास निकृष्टत्वात् । विशेष्यमात्रस्य प्रत्यक्ष-त्वेन विशिष्ट ज्ञानस्यापिप्रत्यक्षत्वस्वीकारे धार्मिकस्त्वमसीति वाक्य जन्यमपि ज्ञान प्रत्यक्ष भवेत् इति सिद्धान्त्याशय । 'अतः' इति । तत्त्वमसिवाक्यजन्यं ज्ञानं प्रत्यक्ष मिति मतमद्वैतिनाम् । अहमर्थस्य प्रत्यक्षत्वेऽपि ब्रह्मात्मकत्वस्य तस्मिन् शास्त्रवेद्यतया परोक्षमेत्राह ब्रह्मात्मकोऽस्मीति ज्ञानमुक्तवाक्याद्भवतीति सिद्धान्तिनामाशय. । योगेनत्वात्मनो ब्रह्मात्मकत्वसाक्षात्कारो मानसो जायत इत्यन्यदेतत् । अद्वैतिना प्रत्यक्षनिरूपणप्रक्रिया निरस्यनि 'एतेने'ति । एकमेव चैत-न्यंत्रिधा भवत्युपाधिभेदात् अन्तःकरणावच्छिन्न प्रमाता, अन्तःकरण-वृत्त्यवच्छिन्नं प्रमाण, विषयावच्छिन्नं प्रमेयमिति । प्रत्यक्षस्थले त्रया-णामेकत्वं भवति । एकदेशस्थोपाधेरुपधेयाभेदकत्वात् । चक्षुरादिद्वा-राऽन्तः करणस्य विषयदेश गत्वा विषयाकारपरिणामो भवति । इय-मेव वृत्तिः । वृत्त्यवच्छिन्नविषयावच्छिन्नचैतन्ययोरैक्ये प्रत्यक्षज्ञान-त्वमिति तेषां कल्पना । तदपि प्रत्यक्षं सन्मात्रविषयमभेदमेव गृह्णा-ति, न तु भेदम्, भेदस्तु भ्रान्त्यैव सिद्ध्यति, न तु प्रमयेति तदाशय । 'निरस्ते'ति अद्वैतपरिरक्षणश्रद्धामूलेय कल्पना आकरे श्रीभाष्यादौ प्रतिक्षिप्तेत्यर्थः । 'इन्द्रियाणा हि चरता यन्मनोऽनुविधीयते । तदस्य हरति प्रज्ञाम् ।' (गी) 'इन्द्रियाणां हि सर्वेषा यद्येकं क्षरतीन्द्रियम् ।

ननु, "काणाद पणिनीय च सर्वशास्त्रोपकारकम्" इत्युक्तत्वात् कथ गौतममतनिरास इति चेत्; उच्यते; न खलु (नास्माभिः) कात्स्न्र्येनास्य मतस्य निरासः क्रियते । यावदिह युक्तियुक्त तावत्स्वीक्रियते, परकल्पिततटाकोपजीवनवत् । न खलु तटाकस्थपङ्कोऽपि स्वीक्रियते । अतः परमाणुकारणत्वम्, वेदपौरुषेयत्वम्, ईश्वरानुमानिकत्वम्, जीवबिभुत्वम्, सामान्यविशेषसमवायाना पदार्थत्वेन स्वीकार, उपमानादेः पृथक् प्रमाणत्वकल्पनम्, सख्यापरिमाणपृथक्त्वविभागपरत्वापरत्वगुरुत्वद्रवत्वादीना पृथक् गुणत्वकल्पनम्, दिशोऽपि द्रव्यत्वकल्पनमित्यादिसूत्रकारादिविरुद्धप्रक्रिया नास्माभिः स्वीक्रियते । अविरुद्धानि तु स्वीक्रियन्त इति न विरोधः ॥

इति श्री वाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचिताया यतीन्द्रमतदीपिकाया शारीरकपरिभाषाया प्रत्यक्षनिरूपण नाम प्रथमोऽवतार ॥



---

तेनास्य क्षरतिप्रज्ञा' (मनु) इत्यादिप्रमाणसिद्ध ज्ञानस्यैवात्मधर्मस्य मनइन्द्रियद्वारा विषयैस्सयुज्य तत्प्रकाशकत्वमिति सिद्धान्तिभिः स्वीकृतम् । इति ज्ञेयम् । तार्किकमत निरस्यति **निर्विकल्पक**'मिति । योजनाहीनम्-सम्बन्धानवगाहि । सामान्येन वा विशेषेण वा केनचिद्धर्मेण विशिष्टमेव चक्षुस्संनिकृष्ट गृह्यते । न तु वस्तुमात्रम् । अननुभवात्तथा । किञ्चिदिदमित्यपि नामादिविशेषानवगाहि वस्तुत्वादिसामान्यावगाह्येवेति सिद्धान्तिनामाशयः । निर्विकल्पकसमाधावपि सविशेषमेव ध्येयवस्त्ववभासते। 'प्रकाशादिवच्चावैशेष्यम्' (ब्र. मी.) इति सूत्रे स्पष्टोऽयमर्थः। ध्येयेन तन्मयीभावात् भावनाप्रकर्षतः सविकल्पक इव ध्यातृध्यानयोः न स्फुटविविक्तावभासो निर्विकल्पके। सविकल्पके पुनः त्रिपुटी भासते इति विवेकः।

## ॥ अथ द्वितीयोऽवतारः ॥

अथानुमानं निरूप्यते। व्याप्यस्य व्याप्यत्वानुसंधानात् व्यापकविशेषप्रमितिरनुमिति । तत्करणमनुमानम्। व्याप्यस्य - धूमस्य, अग्निव्याप्यत्वानुसंधानात् व्यापकविशेषप्रमिति -वह्निप्रमिति॥ अनधिकदेशकालनियमं(तं)व्याप्यम्। अन्यूनदेशकालवृत्ति व्यापकम्। तदिदमविनाभूत व्याप्यम्, तत्प्रतिसबन्धि व्यापकमिति। तेन निरुपाधिकतया नियतसबन्धो व्याप्तिरित्युक्त भवति। सेयं यत्र धूमस्तत्र वह्निरिति

---

'**काणाद**'मिति गोतमीयस्याप्युपलक्षणम्। तर्कशास्त्रम्। '**सूत्रकारादी**'ति। परमाणुकारणत्वसमवायाभ्युपगमयो. खण्डनं महद्दीर्घाधिकरणे कृत ब्रह्मसूत्रकृद्भिः। आनुमानिकत्वमीश्वरस्य प्रतिषिद्धं शास्त्रयोनित्वादित्यत्र। वेदाना नित्यत्वस्य देवताधिकरणे प्रतिपादितत्वात्तत्पौरुषेयत्ववाद. प्रतिक्षिप्तः। उत्क्रान्त्यादिभिर्जीवात्मनामणुत्वस्थापना त्तद्विभुत्वपक्षोऽपि तार्किकाभिमतो निरस्त इत्यनुसन्धेयम्॥

॥ इति प्रथमावतार व्याख्या ॥

## ॥ अथ द्वितीयावतार व्याख्या ॥

'**व्याप्यस्ये**'ति। हेतु व्याप्यः। साध्य व्यापकम्। हेतोस्साध्यनिरूपितव्याप्यत्वज्ञानात् (पक्षे) व्यापकविशेषस्य पक्षवृत्तिसाध्यस्य प्रमितिरनुमितिरित्यर्थ.। तत्करणमनुमान-व्याप्तिज्ञानम्। लक्ष्ये सङ्गमयति '**व्याप्यस्ये**'ति। पर्वतो वह्निमान् धूमादित्यत्र। '**अनधिके**'ति। अधिकः—साध्यानधिकरणीभूतः देशः कालश्च। तत्रावृत्तिस्सद्धेतुरित्यर्थः। साध्यसामानाधिकरण्ये सति साध्याभाववदवृत्तित्वं व्याप्तिरित्येकः पक्षः। '**अन्यूने**'ति। हेतुमति सर्वत्र वर्तमान साध्य व्यापकमित्यर्थः। तत्प्रतिसम्बन्धि हेतुनिष्ठाविनाभावनिरूपकम्। '**नियते**'ति। अव्यभिचरितसामानाधिकरण्य मित्यर्थ.। हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न साध्यसामानाधिकरण्य हेतो-

व्याप्ति भूयोदर्शनेन गृह्यते । व्याप्ति द्विधा, अन्वयव्यतिरेक-भेदात् । साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वय-व्याप्ति । यथा यो यो धूमवान् स सोऽग्निमानिति । साध्य-निषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्ति व्यतिरेकव्याप्ति. । यथा योऽनग्नि स निर्धूम इति। सेयमुभयविधा व्याप्तिः उपाधिसभवे दुष्टा । साध्यव्यापकत्वे सति साधनाव्यापक-त्वमुपाधि । यथा वह्निना धूमे साध्यमाने आर्द्रेन्धनसंयोग उपाधि । मैत्रीतनयत्वेन श्यामत्वे साध्यमाने शाकपाकजत्व-मुपाधि । सचोपाधि द्विविध, निश्चित शङ्कितश्चेति । निश्चितो यथा, विप्रतिपन्ना सेवा दुःखहेतुः, सेवात्वात्, राज-सेवावत् इत्यत्र पापारब्धत्वमुपाधि । अथ चेश्वरसेवायां

---

स्साध्यनिरूपिता व्याप्तिरित्यर्थः । इयमन्वयव्याप्ति. । नियतत्वोप-पादक निरुपाधिकत्वम् । उपाधिरहितत्वेसति साध्यवद्वृत्तित्वं हेतो र्व्याप्तिरिति पक्षान्तरम् । भूयोदर्शनेन-भूयस्साध्यहेत्वोरेकस्मिन्नधि-करणे सहवृत्तित्वदर्शनेन । '**साधनविधा**'विति । यत्र-यत्र हेतुरस्ति, तत्र-तत्र साध्यमस्तीति अन्वयमुखेन-सत्त्वमुखेन, हेतुसाध्ययो, सामाना धिकरण्यद्वारा प्रवृत्ता-गृह्यमाणाऽन्वयव्याप्तिरित्यर्थ । '**साध्यनिषेध**' इति । यत्र यत्र साध्य नास्ति तत्र तत्र हेतुर्नास्तीति अभावमुखेन साध्यभावहेत्वभावयो साहचर्यमुखेन गृहीता व्यतिरेकव्याप्ति रित्यर्थ. । साध्याभावव्यापकाभावप्रतियोगित्व हेतो रिति भाव. । दुष्टा-बाधिता । उपाधि –उपाधिलक्षणम् । साधनाव्यापक उपाधिरिति पाठः साधी-यान् । उपाधिस्थलमुदाहरति '**यथे**'ति । धूमवान् वह्नेरित्यत्रार्द्रेन्धन-सयोगः शुद्धसाध्यव्यापक उपाधि. । क्वचित् पक्षविशेषणधर्मावच्छिन्न-साध्यव्यापकउपाधिरस्ति । तत्स्थल दर्शयति '**मैत्री**'ति । अयं (सद्यो-जात.) मैत्रीतनय. श्यामः मैत्रीतनयत्वात् पूर्वमैत्रीतनयवत् इत्यत्रशाक-पाकजत्वमुपाधि । अय च न शुद्धसाध्यश्यामत्वव्यापकः । नीलोत्प-लादौ व्यभिचारात् । अपि तु मैत्रीतनयत्वविशिष्टश्यामत्वव्यापको भवति । हेतुमति पक्षे शुक्ले मैत्रीतनये नास्त्ययमुपाधिरिति साधना-व्यापक. । उपाधिस्थले हेतोस्साध्यव्यभिचारः साध्यव्यापकोपाधि-

नास्तीति निश्चयादयं निश्चितोपाधिः ॥ शङ्कितो यथा, विप्रतिपन्नो जीव एतच्छरीरावसाने मुक्तिमान्, निष्पन्नसमाधित्वात्, शुकादिवदित्यत्र कर्मात्यन्तपरिक्षय उपाधि । स च निष्पन्नसमाधौ विप्रतिपन्ने जीवे अस्ति(वा)नास्तीति सदिग्धत्वाच्छङ्कितोपाधि. । अतो निरुपाधिकमबन्धवव्याप्यमिति सिद्धम् ।

व्याप्यं साधनम्, लिङ्गमित्यनर्थान्तरम् । तस्य द्वे रूपे अनुमित्यङ्गभूते व्याप्ति. पक्षधर्मता चेति । पञ्च रूपाण्यपि सन्ति, तानि च पक्ष (व्यापकत्वम्) धर्मत्वम्, (सत्त्वम्).सपक्षे सत्त्वम्, विपक्षाद्व्यावृत्ति, अबाधितविषयत्वम्, असत्प्रतिपक्षत्व चेति । सिषाधयिषितधर्मविशिष्टो–धर्मी पक्ष । यथा

---

व्यभिचारेणानुमीयते । प्रकृते च विशिष्टसाध्यव्यभिचारेऽनुमिते विशेषणवति विशिष्टव्यभिचारो विशेष्यव्यभिचारपर्यवसायी भवति । सोपाधिकश्च हेतुराभासो भवति व्याप्यत्वासिद्ध । इति बोध्यम् । '**निश्चित**'इति । साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चित इत्यर्थं । यथा ऽग्निना धूमानुमाने निश्चितोपाधिरार्द्रेन्धनसयोग. ॥

'**संदिग्ध**'इति । पक्षे साधनाव्यापकत्वेन सदिग्ध इत्यर्थं. । तथैवह्युदाहरत्यग्रे । निश्चितोपाधिमुदाहरति **विप्रतिपन्ना सेवे**'ति । दु.खहेतुर्नवेति सदिह्यमाना भगवत्सेवेत्यर्थ । ईश्वर सेवा दु.खहेतुः सेवात्वादित्यत्र पापारब्धत्वमुपाधिरीश्वरसेवाया पक्षे नास्तीति निश्चितोऽस्ति । द्वितीयमुदाहरति '**शङ्कित**'इति । निष्पन्न समाधेर्योगिन प्रारब्धकर्मात्यन्तपरिक्षयेमोक्षोभवति । 'तस्य तावदेव चिर'मिति श्रुतेः । कर्मात्यन्तपरिक्षयश्च पक्षस्य कस्यचिद्योगिन एतद्देहावसाने उत प्रारब्धशेषफल देहान्तरावसाने वेति सदेहत. सदिग्धोपाधि । उपाधिसदेहाच्चव्याप्तिसदेहेन हेतोरसाधकत्वम् । '**लिङ्गम्**' लीनमर्थं गमयतीति ।

'**पञ्च**'ति । व्याप्तिपक्षधर्मत्वयोर्विस्तारभूतानि पञ्चरूपाणि । पक्षधर्मत्व-पक्षवृत्तित्वम् । पक्षव्यापकत्वमिति पाठे पक्षतावच्छेदकधर्मावच्छिन्ने यावति धर्मिणि वर्तमानत्वमित्यर्थ. । पक्षैकदेशावृत्तौ

अग्निमत्त्वादिसाधने पर्वतादिः । सिषाधयिषितधर्मसजातीय-धर्मवान् सपक्षः । यथा महानसादिः । साध्यतज्जातीयशून्यो विपक्षः । यथा महाह्रदादिः । प्रबलप्रमाणेन पक्षे निश्चित-साध्याभाववत्त्वं बाधितविषयत्वम् । यथा महाह्रदो अग्नि-मानित्यादि । तदभाववत्त्वमबाधितविषयत्वम् । समबलतया प्रतीयमानप्रमाणोपरोधाभावोऽसत्प्रतिपक्षत्वम् । एवंभूतं व्याप्यं द्विविधम् । अन्वयव्यतिरेकि-केवलान्वयिभेदात् । पूर्वो-क्तपञ्चरूपोपपन्नं व्याप्यमन्वयव्यतिरेकि । यथा, पर्वतोऽग्नि-मान् धूमवत्त्वात् यो यो धूमवान् स सोऽग्निमान् यथा महानसः, योऽनग्निस्स निर्धूमः—यथा ह्रद इति । तादृशमेव विपक्षरहितं व्याप्यं केवलान्वयि । यथा-ब्रह्म शब्दवाच्यं वस्तु-त्वात्, घटवत् । विपक्षाभावात् केवलान्वयि चतूरूपोप

---

भागासिद्धिर्दोषः । 'केवलान्वयी'ति । व्यतिरेकव्याप्तिशून्यत्वे सत्यन्वय-व्याप्तिमत्त्वं तत्त्वम् । अन्वयतो व्यतिरेकतश्चव्याप्तिमत्त्वमन्वयव्यतिरे-कित्वम् । तत्र पञ्चरूपयुक्तं सद्विपक्षक मन्वयव्यतिरेकि साधनं भवतीति प्रोक्तम् । 'तादृशमेवे'ति पञ्चरूपोपपन्नमेवासद्विपक्षकं केवलान्वयीत्यर्थः । पूर्वत्रविपक्षोजलह्रदादिः प्रसिद्धोऽस्ति । अत्रतुसाध्यस्य सर्वत्रैव सत्त्वा-त्तदभाववान् बिपक्षो नास्त्येव । अत्यन्ताभावाप्रतियोगि केवलान्वयि वाच्यत्वादि । तत्साध्यकं लिङ्गमपि केवलान्वयीत्युच्यते । रूपपञ्चके विपक्षव्यावृत्तिर्नाम विपक्षे सति तत्र हेतोरवृत्तेर्विपक्षस्यैवाभावाद्वा हेतोः सिद्ध्यतीत्याशयः । मतान्तरमाह 'विपक्षाभावा'दिति । विपक्ष-स्याभावेन तद्वृत्तित्वस्य प्रतियोगिनोऽप्रसिद्धेस्तदभावोऽप्यप्रसिद्ध इति पञ्चमरूपाभावाच्चतूरूपोपपन्नं केवलान्वयीत्यर्थः । चतूरूपोपपन्नमित्य-नन्तरं वा इति मूले पूरणीयम् । न्यायपरिशुद्धौ पक्षद्वयमुक्त्वा प्रथमः पक्षः समर्थितः । यथावस्थितपाठे त्वयमर्थः तादृशमेव-व्याप्तिपक्षधर्म-ताविशिष्टमेवासद्विपक्षं केवलान्वयि, विपक्षाभावात् विपक्षवृत्तित्वा-भावस्य पञ्चमरूपस्याभावाच्चतूरूपोपपन्नमिति । केवलव्यतिरेकिणी'ति । पृथिवी गन्धवती पृथिवीत्वात्, पृथिवी इतरभिन्नागन्धवत्त्वादित्यादौ ।

पन्नम्। केवलव्यतिरेकिणि साध्याप्रसिद्धे तद्व्यतिरेकव्याप्तिर्दुर्ग्रहा। अत केवलव्यतिरेकिनिरास.। केवलान्वयिनि अन्वयव्यतिरेकिणि चात्यन्तातीन्द्रियार्थगोचरता निरस्ता।

तदेतदनुमान स्वार्थ परार्थ चेति द्विधा विभज्य केचिदाहु। सर्वेषामेवानुमानाना स्वप्रतिसंधानादिबलेन प्रवृत्ततया स्वव्यवहारमात्रहेतुत्वमिति स्वार्थानुमानमेवेत्यपरे। तदनुमानबोधकवाक्य प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवमयुक्तम्। तत्र, साध्यवत्तया पक्षवचन प्रतिज्ञा। यथा पर्वतोऽग्निमानिति। लिङ्गस्य वचन हेतु, यथा धूमवत्त्वादिति। व्याप्तिनिर्देशपूर्वकं दृष्टान्तवचनमुदाहरणम्। तत् द्वि-

---

'साध्याप्रसिद्धे'रिति। अय भाव —अनुमानात् पूर्वसाध्य क्वचित् प्रसिद्ध न वा? सपक्षेचेत्प्रसिद्ध तदाऽन्वयित्वम्। विपक्षे चेत् व्याघात। पक्षे चेदनुमान वैयर्थ्यम्। पूर्व साध्यस्याप्रसिद्धौ तद्व्यतिरेकव्याप्तिरपि दुर्ग्रहा। अत. केवल व्यतिरेकि साधनदशा नासादयतीति। आत्मसिद्धिन्यायपरिशुद्ध्यादौ केवलव्यतिरेकिण. तार्किकाभिमतस्य खण्डन कृत द्रष्टव्यम्। सिद्धान्ते तूक्तस्थले कुसुमादौ कुत्रचित् सिद्धो गन्धो जलादिभेदश्च घटादौ पृथिवीत्वावच्छेदेन साध्यत इत्यन्वयव्यतिरेकित्वमतम्। अत्यन्तातीन्द्रियमर्थमनुमानेन साधयन्त्यानुमानिका:। तन्नयुक्तमित्याह 'केवले'ति। दृष्टार्थविसजातीयत्वमत्यन्तातीन्द्रियत्वम्। यथाऽशरीरेश्वरकर्तृत्वम्। तस्यानुमानेन साधनासम्भव। शरीरिणैव कर्त्रा कार्यत्वस्य व्याप्तेर्ग्रहणात्। अलौकिकार्थसिद्धि शास्त्रत एवेति हार्दम्।

केचित्—तार्किका। अपरे-सिद्धान्तिन.। व्याप्तिपक्षधर्मत्वविशिष्टहेतुज्ञानात् ज्ञातु. स्वस्यैवानुमिति र्भवति। नत्वन्यस्य लिङ्गज्ञानात् स्वस्यानुमिति:। अतोऽनुमान स्वार्थम्-स्वानुमितिसाधकमेव। अनुमित्या साध्य: पक्षे साध्यव्यवहारोऽपि स्वस्यैवास्ति। तदनुमान क्वचित्स्वयमेव भूय: साहचर्यदर्शनात् सपादितम्। क्वचित्तु परप्रयुक्तन्यायवाक्यार्थपरामर्शात् स्वेन सपादितमिति अनुमान सपादकहेतुभेद-

विधम्, अन्वयव्यतिरेकभेदात् । यथा यो यो धूमवान् स सोऽग्निमान्, यथा महानस इत्यन्वयोदाहरणम् । योऽनग्निस्सनिर्धूम. यथा ह्रद इति व्यतिरेकोदाहरणम् । दृष्टान्तावमर्शनेन व्याप्ततया पक्षे हेतूपसहारवाक्यमुपनय । सोऽपि द्विविध.. अन्वयव्यतिरेकभेदात् । तथा धूमवानित्यन्वयोपनय. । अय च न तथा निर्धूम इति व्यतिरेकोपनयः । हेतुपूर्वक पक्षे साध्योपसहारवाक्य निगमनम् । एतदपि द्विविधम् तथैव । यथा तस्मादसावग्निमानित्यन्वयेन निगमनम् । तस्मादय निरग्निर्न भवतीति व्यतिरेकेण । एवं पञ्चावयववादिनो नैयायिका. । प्रतिज्ञाहेतूदाहरणरूपत्र्यवयववादिनो मीमांसका. । उदाहरणोपनयरूपावयवद्वयवादिनस्सौगताः । अस्माक त्वनियम । क्वचित्पञ्चावयवा., क्वचित् त्रयोऽवयवाः, क्वचित् द्वाववयवौ । उदाहरणोपनयाभ्यामेव व्याप्तिपक्षधर्मतयोस्सिद्धत्वात्तावतैवानुमित्युपपत्तेः । मृदुमध्यम-

---

मात्रम् । यदि परप्रयुक्तन्यायवाक्यप्रयोज्यं स्वार्थेऽनुमाने परार्थमितिपरिभाषामात्रम्, तर्हि न नः क्वापि क्षतिरिति भाव. ।

तदनुमानबोधकम्—परार्थानुमानज्ञानजनकम् । व्याप्तिपक्षधर्मत्वविशिष्ट हेतुरूपानुमान बोधकमिति फलितम् । **'अस्माक'**मिति । मत इति शेषः । उदाहरणोपनययोरावश्यकता । मृदु मध्यमतीव्रबुद्धीनां विनेयाना कृते यथार्ह द्वित्रिपञ्चावयवप्रयोग. प्रयोक्तुरैच्छिक इत्याशय । **'धूली'**ति । धूलीपटले धूमत्वभ्रमेणजातमग्न्यनुमान बाधितम् । अतस्तस्याभासत्वम् । धूलीपटले वह्निव्याप्त्यभावात् इति भावः ।

प्रसङ्गाद्धेत्वाभासान् निरूपयति । **'अन्ये'** इति । सद्धेतुतोऽन्ये हेतव आभासा दुष्टा । व्याप्तिधर्मतयोरभावादित्यर्थ । हेतुवदाभासन्ते इति हेत्वाभासा दुष्टहेतव । हेतोराभासा दोषाश्चपञ्च । कालात्ययापदेशोबाधः, प्रकरणसमः सत्प्रतिपक्ष । प्राचामिय सज्ञा । यद्विषयकत्वेन ज्ञानस्यानुमिति तत्करणान्यतरविरोधित्व तत्त्व हेत्वाभासत्व हेतुदोषत्वम् । दोषवत्त्व दुष्टत्वम् । **स्वरूपे**'ति । पक्षावृत्तिर्हेतु स्वरूपासिद्धः ।

कठोरधियां विस्तरसंग्रहाभ्यां व्यवहार उपपद्यत इत्यनियम एव । एवं पञ्चावयवयुक्तः सद्धेतुरेव वह्न्यनुमापकः । सद्धेतुरित्युक्तत्वात् धूमसदृशधूलीपटलान्न वह्न्यनुमिति. ।

अन्ये हेतुवदाभासमाना हेत्वाभासा, ते चासिद्धविरुद्धानैकान्तिकप्रकरणसमकालात्ययापदिष्टभेदात्पञ्चप्रकाराः। तत्रासिद्धः त्रिविध—स्वरूपासिद्ध आश्रयासिद्धो व्याप्यत्वासिद्धश्चेति । स्वरूपासिद्धो यथा, अनित्यो जीव. चाक्षुषत्वात्, घटवदिति । आश्रयासिद्धस्तु. व्योमारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् इति । व्योमारविन्दमाश्रयः, स चासिद्धः । व्याप्यत्वासिद्धो द्विविध, एको व्याप्तिग्राहकप्रमाणाभावात्, अपरस्तु उपाधिसद्भावात् । आद्यो यथा, यत्सत् तत्क्षणिकमिति । क्षणिकत्वसत्त्वयोः व्याप्तिग्राहकप्रमाणासिद्धे. । द्वितीयो यथा, अग्नीषोमीयहिंसा अधर्मसाधिका, हिंसात्वात् क्रतुबाह्यहिंसावदिति । अत्र निषिद्धत्वमुपाधिः । अतो हिंसात्वहेतुस्सोपाधिकः । साध्यविपरीतव्याप्तो हेतुर्विरुद्धः । तद्यथा, प्रकृति नित्या कृतकत्वात् कालवदिति । कृतकत्वहेतुः साध्याभावव्याप्तः । सव्यभिचारोऽनैकान्तिकः । स च द्विविध, साधारणोऽसाधारणश्चेति ।

---

पक्षवृत्तित्व हेतो. स्वरूपम् । तदभावात्स्वरूपासिद्धत्वम् । यथा चाक्षुषत्व जीवे पक्षे नास्तीति । आश्रयासिद्धि., पक्षे पक्षतावच्छेदकाभाव. । आश्रयस्वरूपासिद्धिज्ञानयो पक्षधर्मताधीविरोधित्वम् । 'यत्स' दिति । सौगतानामिदमनुमान, घटादिक्षणिक सत्त्वादिति । एकक्षणमात्रवृत्तित्व क्षणिकत्वम् । 'व्याप्ती'ति । ज्ञेयस्य ज्ञातुश्च क्षणिकत्वे भूयोदर्शनाधीनव्याप्तिग्रहणायोगाद् व्याप्यत्वासिद्धिरित्यर्थ. । उपाधिना हेतो व्यभिचारोन्नयनात् सोपाधिको हेतुश्चव्याप्यत्वासिद्ध इति बोध्यम् । 'साध्ये'ति । साध्याभावव्याप्त इत्यर्थ । विरोधबाधसत्प्रतिपक्षाणा ज्ञानस्यानुमितिविरोधित्वम् । अनैकान्त्य शब्दित व्यभिचारज्ञानस्य च व्याप्तिज्ञानप्रतिबन्धकत्वमिति विवेक. ।

पक्ष सपक्षविपक्षवृत्तिः साधारणानैकान्तिकः। यथा शब्दो नित्य प्रमेयत्वात् कालवत्। असाधारणस्तु सपक्षविपक्षव्यावृत्त। यथा भूर्नित्या गन्धवत्त्वात्, व्योमवदिति। प्रकरणसमस्तु साध्यविपरीतसाधकहेत्वन्तरवान्। यथा ईश्वरो नित्य अनित्यधर्मरहितत्वात् ईश्वरो न नित्य नित्यधर्मरहितत्वादिति। अयमेव सत्प्रतिपक्ष। यस्य हेतोस्साध्याभाववान्पक्ष स कालात्ययापदिष्ट। स यथा, अग्निरनुष्ण पदार्थत्वात् जलवत्। अयं च प्रत्यक्षेणैवोष्णत्वावधारणाद्बाधितः।

एवमनुमाने निरूपिते उपमानादेरनुमानादावन्तर्भावः। यथा—अतिदेशवाक्यार्थस्मरणसहकृतसादृश्यविशिष्टपिण्डज्ञानमुपमानम्। गवयमजानानोऽपि यथा गौस्तथा गवय इति कुतश्चिदारण्यकाच्छ्रुत्वा वन गतो अतिदेशवाक्यार्थ स्मरन् यदा गोसादृश्यविशिष्टपिण्ड पश्यति, तदा तद्वाक्यार्थ-

---

'अतिदेशे'ति। यथा गौस्तथा गवय इत्यतिदेशवाक्यम्। यदा गोसदृश पिण्ड पश्यतीति पाठ शोभनः। 'तदुपमान'मिति। उपमितिकरणमुपमान प्रमाणान्तरमिति तार्किकादय। उपमितेर्यथायथ प्रत्यक्षाद्यन्तर्भावान्न तत्करण प्रमाणान्तरमिति सिद्धान्तिन। उपमितिः सादृश्यज्ञानम्, सञ्ज्ञासञ्ज्ञिसम्बन्धज्ञान वा, मतभेदेन। 'तस्ये'ति। पूर्वश्रुतातिदेशवाक्यार्थ गोसादृश्यविशिष्ट प्रतिसन्धानात्मकस्य सोऽयगवय-इत्यस्य प्रत्यक्ष एवान्तर्भाव.। स्मरणरूपत्वात्—पूर्वानुभूतसादृश्यप्रतिसन्धानरूपत्वादित्यर्थ। 'व्याप्ती'ति। गोसदृशोऽयमिति ज्ञानादेतत्सदृशो गौरितिज्ञान यज्जायते तदुपमितिरिति केचिन्मन्यन्ते (वेदान्तपरिभाषाकारादय)। यो यन्निष्ठसादृश्यप्रतियोगी स तत्प्रतियोगिकसादृश्यवानिति व्याप्ति ज्ञानजन्यत्वादनुमितिरेवेयमिति भावः। स्वीयसव्यदक्षिणहस्तादौ मिथ. सादृश्यस्य पुन. पुनरनुसन्धानात् सुदृढत्वेन व्याप्तिसंस्कारस्य सदृशदर्शनेन झटित्येवोद्बोधान्नियतमेव व्याप्तिस्मरणं सम्भवतीत्यनुमानमेव प्रकृतोदाहरणे साधीय इति हार्दम्। 'वाक्यजन्यत्वा'दिति। तार्किका अय(गवय.) गवयपदवाच्य इति शक्तिज्ञान

स्मरणसहकृतगोसादृश्यविशिष्टपिण्डज्ञानं जायते, तदुपमान-मित्युच्यते । तस्य स्मरणरूपत्वात्प्रत्यक्षेऽन्तर्भावः, व्याप्तिग्रहा-पेक्षत्वादनुमानेऽन्तर्भावः, वाक्यजन्यत्वाच्छब्देचान्तर्भाव ऊह्यः ।

अर्थापत्तिर्नाम, दिवा अभुञ्जानस्य पुरुषस्य पीनत्व-दर्शनात् रात्रिभोजनं कल्प्यते । एतस्यानुमानेऽन्तर्भाव । तर्को नाम व्याप्याङ्गीकारेण व्यापकानिष्टप्रसजनम् । तद्यथा, पर्वतो वह्निमान् धूमवत्त्वादित्यनुमाने, धूमोऽस्तु वह्निर्मास्तु इत्युक्ते, यदि वह्निर्नस्यात् तर्हि धूमोऽपि न स्यादिति । एत-स्य प्रमाणानुग्राहकत्वम् । तर्कानुगृहीतप्रमाणपूर्वकतत्त्वाव-धारणं निश्चयः । वीतरागकथा वाद. । पक्षद्वयसाधनवती

---

मुपमिति. । तत्करणं गोसादृश्यविशिष्ट पिण्डदर्शनम् । अतिदेशवाक्यार्थ-स्मरणं व्यापार इति वदन्ति । अत्रापि न पृथगुपमानं प्रमाणमेष्टव्यम् । आरण्यकवाक्यादेव गवयपदप्रवृत्तिनिमित्त धर्मपरिचायकगोसादृश्याव-गमकात्तात्पर्यबलात्तदुपलक्षितधर्मविशेषावच्छिन्ने गवयपदस्य शक्ति-ग्रहो जातः । गवयपिण्डस्य गोसादृश्यवतो गवयत्वसंस्थानेन. प्रत्यक्ष-तोऽयंगोसदृश इति दर्शनेन तु स्फुटाभिव्यक्तिमात्रं जायते एतद्धर्माव-च्छिन्नो गवयपदवाच्य इति । सञ्ज्ञासञ्ज्ञिनोर्वाच्यवाचकभावलक्षणसम्ब-न्धग्रहस्तु प्रथममेवातिदेशवाक्याज्जात इति भाव ।

**'अर्थापत्ति'**रिति । अनुपपद्यमानार्थदर्शनादुपपादककल्पनमर्था-पत्तिः प्रमाणान्तरमिति भाट्टादय । अस्या अनुमानेऽन्तर्भावमाह **'एतस्ये'**तिवाक्येन । देवदत्तो रात्रिभोजनवान् दिवाऽभुञ्जानत्वे सति पीनत्वादिति, पीनत्वभोजनयो कार्यकारणभावात् कार्यात्कारणानु-मानमिदम् । सामान्यतो भोजनव्याप्यपीनत्वज्ञानमेव दिवाभोजनबा-धज्ञानसहकृत रात्रिभोजनानुमिति हेतुर्भवतीत्याशयः ।

**'वीतरागे'**ति । अविजिगीषोस्तत्त्वजिज्ञासो कथा वाद । स च तत्त्वनिर्णयफलकः । **'पक्षद्वयं'** वादिप्रतिवादिनो । परपक्षदूषणमात्र प्रतिवादिना यत्र क्रियते सावितण्डा । जल्पवितण्डे विजिगीषुकथे ।

त्रिजिगीषुकथा जल्प । स्वपक्षस्थापनाहीना वितण्डा । अविवक्षितशब्दार्थारोपेण दूषण छलम् । स्वव्याघातदूषण जाति । असदुत्तरं जातिरिति वा । पराजयहेतुर्निग्रहस्थानम् । इत्येनेषामनुमानाङ्गत्वादनुमानेऽन्तर्भाव । क्वचित् क्वचिन्नैयायिकमतानुसा(रेणोक्तम्)रिव्यवहारस्तु तन्मतानुसारेणोक्तः । अतो न विरोध. । इत्यनुमान निरूपितम् ।

इति श्री वाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचिताया यतीन्द्रमतदीपिकाया शारीरकपरिभाषाया मनुमाननिरूपण नाम द्वितीयोऽवतार ॥



अतएवात्रच्छलादेरपि प्रयोग· क्रियते, यया कयाचन विधया विजयसम्पिपादयिषया । '**अविवक्षिते**'ति । नूतनकम्बलवत्त्वतात्पर्येण वादिना नवकम्बलोऽयमिति प्रथममुक्ते तदविवक्षितनवत्वसख्यारूपार्थ मारोप्य प्रतिवादिन दूषण कुतोऽस्य नबकम्बलवत्त्वमिति छलम् । अत्र वादी यदि मनीषीचतुर स्यात् तदा प्रतिवदेत्—त्व छलवादी । मया तु नूतनत्वतात्पर्येणैव नवशब्द. प्रयुक्त इति । यदि तु वादी प्रतिवादिनो वागाटोपेन प्रतिवक्तुमक्षमोजात. तदा प्रतिवादी विजयी भवेत् । इति कथारहस्यम् । '**स्वव्याप्ते**'ति । स्वपक्षेऽप्यापत्तिप्रयोजक परपक्षदूषण जाति रित्यर्थ । '**असदुत्तरम्**'—विना सम्बन्धनियम साहचर्यमात्रमवलम्ब्य परपक्षे क्रियमाण दूषण जातिदूषणम् । यथा पर्वतो वह्निमान् धूमादिति वादिना प्रयुक्ते यदि वह्निमन्महानससाधर्म्याद्वह्निमत्त्व, तर्हि बन्ह्यभाववद्ध्रदसादृश्यात् द्रव्यत्वात्पर्वतस्य वह्न्यभाववत्त्वमेव किं न स्यादिति दूषण प्रतिवादिना कृत जातिर्भवति । '**अनुमानाङ्गत्वा**'दिति । अनुमानोपकरणन्यायानुबन्धित्वादित्यर्थ । '**निग्रहस्थानम्**'—प्रतिज्ञाहान्यादि । 'अप्रतिपत्तिर्विप्रतिपत्तिश्च निग्रहस्थानम्' इति न्यायसूत्रम् । वादिनः स्वकृतप्रतिज्ञात्यागप्रतिज्ञान्तरकरणादिक स्वाज्ञानान्यथाज्ञान ज्ञापकत्वात् पराजयहेतुर्भवति । अत कथाप्रवृत्तै. सावधानै प्रयोगः कार्यः इति फलितम् । वादकथाया तत्त्वनिर्णयार्थाया छलजात्यादि न प्रयोक्तव्यमिति च कथकसम्प्रदाय. ॥

**॥ इति द्वितीयावतार व्याख्या ॥**

## ।। अथ तृतीयोऽवतारः ।।

अनुमाननिरूपणानन्तरं शब्दो निरूप्यते। अनाप्तानुक्तवाक्यजनिततदर्थविज्ञानं शाब्दज्ञानम्। तत्करणं शब्दप्रमाणम्। अनाप्तानुक्तेत्युक्तत्वाद्वेदस्य पौरुषेयत्वमतनिरासः। कारणदोषबाधकप्रत्ययाभाववद्वाक्यं वा। सर्गादौ भगवान् चतुर्मुखाय पूर्वपूर्वक्रमविशिष्टान्वेदान् स्मृत्वा स्मृत्वा उपदिशतीत्युक्त्या वेदस्य नित्यत्वमपौरुषेयत्वं च सिद्धमिति कारणदोषाभावो बाधकप्रत्ययाभावश्च।

ननु, वेदवाक्यानां मीमांसकैः कार्यपरतयैव प्रामाण्यस्वीकारात् सिद्धब्रह्मपरवाक्यानां व्युत्पत्त्यसंभवाच्च कथं प्रामाण्यमिति चेन्न। सिद्धब्रह्मपरवाक्यानामपि उपासनारूप-

---

## ।। अथ तृतीयावतारव्याख्या ।।

'अनाप्ते'ति। आप्तवाक्यं शब्दप्रमाणमिति तार्किकाः। आप्तो-यथार्थवक्ता। वेदस्य पौरुषेयत्वम् ईश्वरकृतत्वं तेषामभिमतम्। वेदापौरुषेयत्ववादिभिस्सिद्धान्तिभिस्तु अनाप्तानुक्तवाक्यं शब्दप्रमाणमित्युच्यते। अस्य लक्षणान्तरमाह 'कारणदोषे'ति। वेदानामपौरुषेयत्वमुपपादयस्तत्र कारणदोषाद्यभावमाह 'सर्गादा'विति। पुरुषबुद्ध्यधीनरचनत्वं पौरुषेयत्वम्। तदभावोऽपौरुषेयत्वम्। ईश्वरस्सन्नपि भगवान् पूर्वानुपूर्वीसमानानुपूर्वीकमेव वेदं प्रतिकल्पं प्रवर्तयतीति सिद्धं वेदानाम् पौरुषेयत्वम्। नित्यत्वं च तेषां सदा एकविधानुपूर्वीकत्वमेव। 'पूर्वेभ्यो वचः एतदूचुः' 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः।।' इत्यादिवचनैर्वेदानामपौरुषेयत्वादिसिद्धिः। 'वाचाविरूप नित्यया वृष्णे चोदस्व' इति श्रुतिश्च ऋगादिभेदवत्या वेदवाण्या नित्यत्वमाह मुक्तकण्ठमेव। हे वृष्णे नित्ययावेदवाचा पुरुरूपया ऋगादिकया भगवन्तं प्रीणयेत्येतद्वाक्यार्थः।

प्रभाकरैः कार्येऽर्थ एव वेदानां तात्पर्यात् तत्रैवाथ पदानां शक्तिग्रहाच्च सिद्धे ब्रह्मणि न प्रामाण्यमित्युच्यते। तन्मतमनुवदति 'ननु' इति। व्युत्पत्त्यसम्भवात्—सिद्धेऽर्थे ब्रह्मणि पदशक्तिग्रहासम्भवात्। व्यवहा-

कार्यान्वयस्वीकारात् । पिता ते सुखमास्ते इति लौकिकसिद्धपरवाक्यस्यापि बोधकत्वदर्शनात् । बालानां लोके मातापितृप्रभृतिभिरम्बातातमातुलचन्द्रादीनङ्गुल्या निर्दिश्य तदभिधायिनः शब्दान् प्रयुञ्जानैः क्रमेण बहुशश्शिक्षिताना तत्तदर्थबुद्ध्युत्पत्तिदर्शनात् । वेदेऽपि परिनिष्पन्नेऽप्यर्थे शब्दस्य बोधकत्वं सम्भवतीति नाप्रामाण्यशङ्कावकाश । तर्हि अभिचारादिप्रतिपादकवेदाशस्य कथ प्रामाण्यमिति नाशङ्कनीयम् । तस्य दृष्टफलप्रदर्शनेनादृष्टस्वर्गादिफलकसाधनादौ प्रवृत्तिप्रयोजकत्वात् । यूपादित्यवाक्य तु आदित्यवद्यूपप्रकाश-

---

राद्विपदाना शक्ति (आनुभाविकोशक्तिः) गृह्यते । स च शक्तिग्रहः कार्यान्वित एवार्थे । यथा गामानयेति उत्तमवृद्धोक्त वचन श्रुत्वा मध्यमवृद्धेन गौरानीयते । व्यवहारमेन दृष्टवतो व्युत्पित्सोर्बालस्यकार्यान्विते गवि शक्तिग्रहो भवति । अत कार्यानन्विते सिद्धे ब्रह्मणि न व्युत्पत्ति, सम्भवति, इति भाव । सिद्धपरवाक्याना प्रामाण्य कथमित्यन्वय । सिद्धपरत्वमत्र सिद्धार्थपरत्वेन पराभिमतत्व बोध्यम् । तन्मत निरस्यति 'न' इति । कार्यान्वित एव पदाना शक्तिरिति स्वीकारेऽपि ब्रह्मणि पदशक्ति सम्भवत्येव । '**ब्रह्मोपासीते**'त्युपासनरूपकार्यान्विततत्वात्तस्येत्यर्थ । अन्वारुह्य(अभ्युपगम्य)वादोयम् । वस्तुत. सिद्धेऽप्यर्थे तात्पर्य वाक्यस्य, पदशक्तिग्रहश्च सम्भवतीत्याशयेनाह '**पिता ते**' इति । यस्यार्थस्य बोधनेन वाक्य प्रयोजनपर्यवसायिभवति । तत्रवाक्यस्यतात्पर्यमत एव प्रामाण्य चाश्रयणीयमेव । यथोदाहृतवाक्यस्य पितु. सकुशलस्थितिरूपे सिद्धेऽर्थे । एतच्छ्रवणेन पितृवृत्तानभिज्ञानेन चिन्तातुरस्य पुत्रस्य चिन्तानिवृत्त्यानन्दप्राप्तिलक्षण प्रयोजनस्य सिद्धे. । एवमेव ब्रह्मप्रतिपादकस्य '**रसो वै स:**' 'रसह्येवाय लब्ध्वानन्दीभवती'ति श्रुत्यन्तवाक्यस्य तव गृहे निधिरस्तीतिवाक्यवत् श्रवणत एव श्रोतुरानन्दप्राप्तिसिद्धे. प्रयोजन पर्यवसायिनो ब्रह्मणि तात्पर्य मतएव प्रामाण्य च सिद्धपरत्वेत्यर्थ । सिद्धेऽप्यर्थे पदाना शक्तिग्रहणप्रकारमुपपादयति '**बालाना**मिति । व्यवहाराद्व्युत्पत्तिर्याहृच्छिकी । प्राथमिकी व्युत्पत्तिस्तु सिद्ध एवार्थे मातापित्रादिभिः बालाना सम्पाद्यत इति भावः ।

नपरम्। अतः कृत्स्नस्य वेदस्य प्रामाण्यम्। स वेदः कर्म-ब्रह्मप्रतिपादकपूर्वोत्तरभागाभ्यां द्विधा भिन्नः। आराधनकर्म-प्रतिपादकं पूर्वकाण्डम्। आराध्यब्रह्मप्रतिपादकमुत्तरकाण्डम्। अतः उभयोर्मीमांसयोरैकशास्त्र्यम्। भागद्वयात्मको वेदः ऋग्यजुस्सामाथर्वरूपेण चतुर्धाऽवस्थितः, पुनरनन्तप्रकारश्च।

ऋगादिबहुप्रकारो वेदः मन्त्रार्थवादविधिरूपेण त्रिविधः। अनुष्ठेयार्थप्रकाशको मन्त्रः। विध्यधीनप्रवृत्त्युत्तम्भकवाक्य-विशेषोऽर्थवादः। हितानुशासनरूपं वाक्यमिह विधिः।

---

**'तत्तादर्थबुद्धौ'**ति। तत्तच्छब्देनेत्यादिः। 'दर्शना'दिति। सिद्धेऽप्यर्थे पदानां शक्तिग्रहः सम्भवत्येवेति शेषः। **'वेदेऽपी'**ति। वैदिकानां स्वर्ग-ब्रह्मादिशब्दानामपि 'यन्न दुःखेन सम्भिन्नम्' 'ब्रह्म परिवृढं सर्वतः' 'बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते' इत्याद्यर्थवादनिरुक्तिनिर्वच-नादिभिस्तत्तदर्थे शक्तिग्रहः सम्भवत्यवेति वेदान्तानां ब्रह्मणि प्रामाण्य-मनपायमिति भावः। **'कथं प्रामाण्य'**मिति। यद्यपि श्येनेनाभिचरन् यजे-तेति वाक्यस्य श्येनयागनिष्ठशत्रुवधजनकत्वबोधकस्य प्रमाजनकत्वा-त्प्रामाण्यकथन्ताशङ्काया अनवकाशः। अथापि शत्रुवधस्य श्येनफलस्य हिंसात्वेन पापसाधनत्वात् फलद्वारा बलवदनिष्टानुबन्धिश्येनविधेः बल-वदनिष्टाननुबन्धीष्टसाधनबोधकत्वरूपं विधेरौत्सर्गिकं प्रामाण्यं कथमि-त्याशयः शङ्कितुः। शङ्कामेनां परिहरति **'तस्ये'**ति। शास्त्रविश्वासो-त्पादनद्वारेति शेषः। श्येनादिविधेरपि वेदशास्त्रे नास्तिकानां मास्ति-क्यबुद्धिमुत्पाद्य हिंसादितस्तान् विनिवर्त्य तेषां वैदिककर्मोन्मुख्यसम्पा-दन एव तात्पर्यम्। तत् तात्पर्यार्थे प्रामाण्यं सुस्थिरमिति भावः। भगव-द्भक्तबलवद्विद्रोहिजनपरिभवनार्थं क्वचिदनुमन्यते कर्माभिचारिकम्। न तु सर्वत्रेति चावधेयम्। **'यूपे'**ति। आदित्यो यूप इत्यर्थवादवाक्यं यूपा-ञ्जनविधिशेषतयाऽञ्जनसंस्कृतयूपप्रशस्तिपरम्। आदित्यवदुज्ज्वल इति। गौणोऽयं प्रयोगः। तात्पर्यार्थे प्रमाणमेवेदमिति भावः। **द्विधाभिन्नः**— भागद्वयविशिष्टः। **'अत'** इति। कर्मब्रह्मभागद्वयात्मकस्य व्याख्येयस्य वेदस्यैकशास्त्रत्वात्तद्व्याख्यारूपयोः कर्मब्रह्ममीमांसयोरैकशास्त्र्यं व्याख्येयक्रमानुसारेण पौर्वापर्यनियमश्चेत्यर्थः। अभिहितं च मीमांसा-

स च त्रिविध । अपूर्वपरिसख्यानियमभेदात् । ते पुनर्नित्य-नैमित्तिककाम्यादिभेदात् बहुविधाः । * व्रीहीन्प्रोक्षतीति विधिरपूर्वविधि । (मनोमयत्वाद्युपासनविधिर्विशिष्टविधि )* इमामगृभ्णन्नित्यश्वरशनाविधिः परिसंख्याविधि । गुर्वभिग-मनादिविधिर्नियमविधि । सन्ध्योपासनादिविधिर्नित्यविधिः। जातेष्ट्यादिविधि नैमित्तिकविधिः । ज्योतिष्टोमादिर्विधि काम्यविधि । एव विध्यर्थवादमन्त्रात्मकस्य वेदस्य छन्दः, कल्पः, शिक्षा, निरुक्तम्, ज्यौतिषम्, व्याकरणमित्येतान्य-ङ्गानि । छन्दोऽनुष्टुप् त्रिष्टुबादिप्रतिपादनरूपम् । श्रौतस्मा-र्तप्रयोगप्रतिपादनपरः कल्पः । शिक्षा वर्णनिर्णयात्मिका । निरुक्त (खा) अपूर्वा र्थप्रतिपादकम् । ज्यौतिपम् अध्ययन-तदर्थानुष्ठानकालनिर्णायकम् । व्याकरण तु सुशब्दस्वरादि-समर्थनपरम् । एव साङ्गस्य वेदस्य प्रामाण्य सिद्धम् ।

---

वृत्तिकारैर्भगवद्बोधायनमहर्षिभिः 'संहितमेतच्छारीरक जैमिनीयेन पोडशलक्षणेनेति शास्त्रैक्यसिद्धि'रिति । 'अनन्तप्रकार' इति । ऋगादि-भेदेन तत्तच्छाखाभेदेन चानन्तविध. । श्रूयते च 'अनन्ता वै वेदा' इति वेदानन्त्यमित्यर्थः ।

'हिते'ति । इष्टानिष्टप्राप्तिपरिहारसाधनालौकिकार्थविधायक वाक्यं विधिरित्यर्थ. । ते—अपूर्वविधय. । आदिपदेन प्रायश्चित्तविधि-सग्रहणम् । 'अपूर्वे' ति । प्रमाणान्तराप्राप्तार्थप्रापकोऽपूर्वविधि । यागा-दिविधिरपूर्वविधि । प्रोक्षणादिविधिश्च । न हि विधानमन्तरेण यागी-येपु व्रीहिपु प्रोक्षणादिप्राप्ति । द्वयोः समुच्चित्य प्राप्तावितरनिवृत्तिफलकः परिसख्याविधिः । यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमा-दत्ते' इति । ऋतस्य—यागस्य । अश्वाभिधानी—अश्वरशना । सह नीत्वाऽश्व गर्दभ च मृदानेयेति चयनप्रकरणे पठ्यते । तत्राश्वरशना-ग्रहणे इमामित्यादिमन्त्रोऽङ्गत्वेन विनियुज्यते 'इत्यश्वाभिधानीमादत्त' इति विधिना । तेन गर्दभरशनाया मन्त्रेण ग्रहण निवृत्तम् । सा तु तूष्णीमेव ग्राह्ये ति सिद्धान्तित पूर्वमीमासायाम् । पञ्च पञ्चनखा भक्ष्या'

अथ श्रुत्यविरुद्धाचारव्यवहारप्रायश्चित्तादिप्रतिपादिका आप्तप्रणीता स्मृति प्रमाणम् । हिरण्यगर्भादीनामाप्तत्वेऽपि तेषा गुणत्रयवश्यत्वसंभवात् तत्कर्तृकयोगकपिलादिस्मृतीना मन्वादिस्मृत्यविरुद्धांशा एव प्रमाणम् । तत्त्वविपर्यासादिविरुद्धांशा न प्रमाणम् । वेदोपबृंहणरूपेतिहासपुराणयोरपि प्रामाण्य स्वतस्सिद्धम् । तत्र भारतरामायणयोः क्वचित्क्वचिद्विरोधभानेऽपि तत्त्वांशे वेदान्तवाक्यवदविरोधो नेय ।

---

इत्यादयोऽपि परिसंख्याविधय उदाहर्तव्या अत्र । 'गुर्वभिगमनादी'ति । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणि श्रोत्रिय ब्रह्मनिष्ठ'मिति नियमविधि । गुरूपदेशत. प्राप्ता विद्यैव सफला, नान्यथा ( स्वय पुस्तकनिरीक्षणादिना ) प्राप्तेति नियम्यते । श्रूयते च 'आचार्याद्धैव विद्या विदिता साधिष्ठ प्रापत्' (छा०) इति । व्रीहीनवहन्तीत्यादिरपि नियमविधिः । 'विधिरत्यन्तमप्राप्ते नियम पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कथ्यते ॥' इत्युक्त मीमासकै । 'सन्ध्ये'त्यादि । यावज्जीवनाधिकारो नित्यविधि. । निमित्तोपनिपाते कर्तव्यस्य विधिर्नैमित्तिकविधि । आभ्या दुरितक्षयः । 'नित्यनैमित्तिकरेव कुर्वाणो दुरितक्षयम्' इति वचनात् । अकरणे चानयो प्रत्यवाय. श्रुत. । सत्या फलेच्छाया कर्तव्य कर्मविधि.काम्यविधिः । इति विवेक । '**मनोमये**'ति । 'स क्रतु कुर्वीत, मनोमयः प्राणशरीर' (छा०) इति मनोमयत्वादिगुणविशिष्टब्रह्मोपासनविधिर्विशिष्टविधि । विशेष्यविशेषणयोर्द्वयोरप्राप्तौ विशिष्टविधिरूरीकृत । एव सोमेन यजेतेति सोमविशिष्टयागविधिर्बोध्य. । '**शिक्षा**' इति । वर्णाना स्थानप्रयत्न स्वरमात्रादिनिरूपिका शिक्षा वर्णनिर्णयात्मिका—वर्णनिर्णयार्थत्वादित्यर्थ. । वर्णशास्त्र शिक्षा । **निरुक्तम्**—यास्कादिप्रणीत प्रायशो वैदिकाना पदाना निरुक्तिनिर्वचनाभ्यामलौकिकापूर्वस्वार्थप्रतिपादकम् । '**सुशब्दे**'ति । साधुशब्देत्यर्थ । शब्दसाधुत्वान्वाख्यान व्याकरणम् । पदशास्त्रमिदम् । साधुशब्दप्रयोगस्यैव श्रेयस्करत्व 'एक. शब्द सम्यक् ज्ञातः शास्त्रान्वितः सुष्ठु प्रयुक्त स्वर्गे लोके कामधुग् भवती'त्याम्नातम् । 'न म्लेच्छितवै नापभाषितवै' इति प्रतिषिद्धश्चापशब्दप्रयोग इति बोध्यम् । 'शिक्षाया वर्णशिक्षा

सर्गादिपञ्चकप्रतिपादकपुराणेष्वपि सात्त्विकराजसतामसभेदभिन्नेषु तत्त्वांशे (विरोधाभावात्) विरुद्धांशो न प्रमाणम्, अन्यत्सर्वं प्रमाणम् । पाशुपताद्यागमा अपि तथैव । आगमदिव्यतन्त्रतन्त्रान्तरसिद्धान्तभेदभिन्नस्य श्रीपाञ्चरात्रागमस्य क्वचिदपि वेदविरोधाभावात् कार्त्स्न्येन प्रामाण्यम् । एवम्, वैखानसागमस्यापि । धर्मशास्त्राणामपि

पदमममधिगमो न्यायक्रिया निर्वचोभ्यां छन्द छन्दश्चितौ स्याद् गमयति समय ज्यौतिष रङ्गनाथ । कल्पेऽनुष्ठानमुक्तं द्यु विततगमितयोर्न्याय-मीमांसयोः स्यादर्थश्चोक्त पुराणस्मृतिषु तदनुगास्त्वां विचिन्वन्ति वेदाः ॥' ( श्रीरङ्ग-स्तव ) इति श्लोकोऽत्रानुसन्धेयः ।

'**आप्ते**'ति । यथार्थद्रष्टृत्वेसति यथार्थं वक्तृत्वमाप्ततमत्वम् । मन्वादीनामाप्ततमत्वं 'यद्वै किञ्चिन मनुरवदत्तद्भेषजम्' 'स होवाच व्यासः पाराशर्यः' 'ब्रह्मवादिनो वदन्ति' इति श्रुतिसिद्धम् । कापिलादिस्मृतीनां मन्वादिश्रुत्यविरुद्धांशे प्रमाणत्वं तद्विरोधेत्वप्रमाणत्वं स्मृत्यनवकाशाधिकरणे ( ब्र० मी० ) प्रोक्तम् । **तत्त्वविपर्यासादयः**—परावरतत्त्वव्यत्यासवेदविरुद्धाचारादिप्रतिपादका भागा अप्रमाणमित्यर्थः । '**वेदोपबृंहणे**'ति । ब्राह्मण पूर्वभागस्योपबृंहणं स्मृतयः । वेदान्तभागोपबृंहणमितिहासपुराणानि । उपबृंहणं स्वावगतवेदार्थानां विशदीकरणं महर्षिवचनैः । '**तत्रे**'ति । **विरोधभाने**—तत्त्वांशे वेदविरोधापातप्रतीतौ । '**वेदान्तवाक्यव**'दिति । यथोपनिषत्सु क्वचिद्रुद्रस्य, क्वचिद्धातुः, क्वचिच्चेन्द्रादेः पारम्यमापाततः प्रतीयते । न्यायसञ्चारादिना तत्र यथा विरोधं परिहृत्य नारायणपारम्यपरत्वं स्थाप्यते, तथैवेतिहासयोः श्रीरामायणभारतयोरप्यविरोधो नेय इत्यर्थः ।

'**सर्गादी**'ति । सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥ प्रतिसर्गः—प्रलयः । पुराणं भगवद्विभूतिविस्तारवर्णनात्मकम् । '**तत्त्वांशे**' इति । हितांशेऽपीति बोध्यम् । '**विरोधाभावा**'दित्यधिकं प्रतीयते । अन्यत्, विरुद्धांशादितरत् प्रमाणं विरोधाभावादिति बोऽन्वयः । '**पाशुपताद्यागमा**' इति । तथा—अविरुद्धांशे प्रमाणभूताः, विरुद्धांशेष्वप्रमाणभूता इत्यर्थः । विरुद्धांशा एवाधिकास्तेष्विति अत्यन्तवृद्धास्तान् न बहुमन्वत इति च बोध्यम् ।

तथैव ॥ शाण्डिल्यपराशरभरद्वाजवसिष्ठहारीतादयो धर्मशास्त्रप्रणेतारः । शिल्पायुर्वेदगान्धर्वभरतागमादिकमप्युपयुक्तांशे तथैव । शिल्पोनाम कर्पणादिगोपुरप्राकारादिनिर्माणप्रतिपादकः । आयुर्वेदो वैद्यकम् । गान्धर्वो गानादिनिरूपकः । भरतागमो नृत्तादिविधायकः । पुनः चतुष्षष्टिकलारूपेषु शास्त्रेषु तत्त्वापायपुरुषार्थोपयुक्तानि प्रमाणानि ॥

---

'आगमे'ति । आगमसिद्धान्त, दिव्यसिद्धान्त, ( अन्यदेव तन्त्रसिद्धान्त इत्यपि नाम । ) तन्त्र सिद्धान्त, तन्त्रान्तरसिद्धान्त इति चतुर्विधसिद्धान्तात्मक भेदभिन्नस्य नानासंहितात्मकस्य कृत्स्नस्य पञ्चरात्र शास्त्रस्य भगवान् श्रीमन्नारायण एव स्वयंवक्तेति कार्त्स्न्येन प्रामाण्यमस्य । पञ्चरात्रस्य कृत्स्नस्यवक्ता नारायण स्वयम्' 'वेदान्तेषु यथान्याय संगृह्य भगवान् हरि । भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथा सुखम् ॥ इति वर्णित भारते मोक्षधर्मे । भक्तानुकम्पया कृतत्वादेव नात्र मोहनार्थत्व शक्यशङ्कम् । व्यूहामृगादिभेदवदत्र सिद्धान्तभेदः । एकमूर्तिप्रधानो मन्त्रसिद्धान्त, चतुर्मूर्तिप्रधानआगमसिद्धान्त । नवमूर्तिप्रधानस्तन्त्रसिद्धान्त । वक्त्रभेदत्रिचतुरादिवक्त्रमूर्तिभेद आराधनादिप्रधानस्तन्त्रान्तरसिद्धान्तः । पुरा श्रीमन्नारायण स्वीयपञ्चायुधागानामोपगायनशाण्डिल्य भरद्वाज कौशिकमौञ्ज्यायनाख्याना महर्षीणा पृथक् पृथगेकैकमेकैकदिवारात्र रहस्याम्नाय माद्य वेदमेकायनसज्ञ लोकरक्षण समायुद्धरण मद्धमस्वाराधनप्रवर्तनार्थ मोक्षैकफललक्षण मध्यापयामास । अतएव श्रीपञ्चरात्रमिति भगवच्छास्त्रमिति चास्य प्रसिद्धि । वेदार्थस्यधर्मस्य वेदान्तार्थस्य च परतत्त्वादेरुपबृंहणमनेन क्रियते। अत्र च क्वचिदप्यतो वेदविरोधो नास्तीति उत्पत्त्यसम्भवाधिकरण श्रीभाष्य श्रुतप्रकाशिका श्रीपाञ्चरात्ररक्षादिषु सुविशद वर्णितम् । आगमप्रामाण्य च परमाचार्यै श्रीमद्यामुनमुनिभिरेतत्प्रमाण्यसंरक्षणार्थमनुगृहीतमिति बोध्यम् । एव वैखानसागमोऽपि भगवदवतारेण विखनसा महर्षिणा प्रणीतो भगवदाराधनप्रतिष्ठोत्सवादिप्रतिपादक प्रमाणभूतो बहुमन्तव्य इतिहार्दम् । '**उपयुक्तांश**' इति । गृहारामकूप भगवन्मन्दिरमण्डपादिनिर्माणे **शिल्पशास्त्रं** प्रमाणम्–उपादेयमित्यर्थः । **गान्धर्वशास्त्र** च नृत्तगीतवाद्यादिप्रतिपादक सङ्गीतशास्त्र भगवदाराधनोत्सवाद्युप-

वकुलाभरणादिदिव्यसूरिश्रीमूक्तय कात्स्न्येन प्रमाणतराः। श्रीमद्रामानुजाचार्यप्रभृतिभिः प्रणीता श्रीभाष्यादिप्रबन्धा प्रमाणतमाः।

पुरुषस्वातन्त्र्याधीनरचनाविशेषविशिष्ट पौरुषेयम्। एतेन काव्यनाटकालङ्कारादीनामपि लक्षणमुक्त स्यात्। एवमाप्तेनोच्चारितान्याकाक्षायोग्यतासनिधिमल्लौकिकवाक्यान्यपि प्रमाणानि। यथा नद्यास्तीरे पञ्च फलानि सन्तीत्यादीनि। एव वैदिकलौकिकसाधारण वाक्य द्विविधम्। मुख्यवृत्तिगौणवृत्तिभेदात्। मुख्यवृत्तिरभिधावृतिः। यथा सिहशब्दस्य मृगेन्द्रे। साऽभिधावृत्ति योगरूढ्यादिभेदेन बहुविधा। मुख्यार्थबाधे सति तदासन्नेऽर्थे वृत्तिरौपचारिकी।

---

युक्ताशे प्रमाण—ग्राह्य भवति। एव चित्रादि कलाज्ञानान्यपि भगवन्मन्दिरमण्डपादिप्रमाधनाद्युपयुक्तानि प्रमाणानि—ग्राह्याणीत्याशय। '**वकुलाभरणादी**ति। श्रीमच्छठकोपमुनेरेवेदमपि नाम। श्रीसम्प्रदायप्रसिद्धवकुलाभरणादिदशदिव्यसूरि श्रीसूक्तिरूपादिव्यप्रबन्धा श्रीरामायणादिवद्वेदाविर्भावविशेपत्वात् संशयादिरहितं यथा तथा वेदतात्पर्यविषयपरतत्त्वहितपुरुषार्थस्वरूपाणा। स्फुटावभासकत्वाच्च प्रमाणतरा—नितरा प्रमाणतया उपादेया इत्यर्थः। '**श्रीमद्रामानुजे**'ति। सस्कृत द्राविडागमद्वयैककण्ठ्यसमर्थनपूर्वकं वेदवेदान्तार्थविशदतमावबोधजनकत्वाच्छ्रुत्यन्तसम्मतविशिष्टाद्वैतप्रतिष्ठापकत्वाच्च परपक्षप्रतिक्षेपपूर्वकं प्रमाणतमा—प्रमाणत्वेनोपादेयतमा इत्यर्थः। वेदार्थविशदविशदतरविशदतमावबोधजनकत्वा द्वेदोपबृहणस्मृत्यादि दिव्यप्रबन्ध श्रीभाष्यादिग्रन्थाना प्रमाणप्रमाणतरप्रमाणतमत्वान्यभिहितान्यत्रेति बोध्यम्।

'**पुरुषे**'ति। प्रबन्धृचेतनेच्छाधीनरचनाविशिष्ट पौरुषेयम्। रचना—पदाना पौर्वापर्यलक्षणानुपूर्वीविशेषः। **लक्षणम्**—पौरुषेयत्वरूपम्। **एवम्**—वेदवाक्यवत्। 'आकाक्षे'ति। 'यत्पदेन विना पदान्तरस्यान्वयबोधाजनकत्वम्, अस्ति तयोराकाक्षा। यथा प्रकृतिप्रत्यययो. क्रियाकारकयोश्च। वाक्यप्रतिपाद्यार्थस्य प्रमाणान्तरतो बाधाभावो

मा द्विविधा, लक्षणागौणीभेदात् । प्रथमा यथा-गङ्गायां घोष इत्यत्राधिकरण(त्व)स्यबाधात्तीरे लक्षणा । द्वितीया यथा-सिंहो देवदत्त इत्यत्र देवदत्ते शौर्यादिगुणयोगात् । एवं वैदिकलौकिकरूपं सर्वं वाक्यजातं सविशेषविषयकम्, भेदविषयकं च । शरीरवाचकशब्दानां यथा शरीरिणि पर्यवसानम्, एवं भगवच्छरीरभूतब्रह्मरुद्राग्नीन्द्रादिचिद्वाचकशब्दानां, तथा तच्छरीरभूतप्रकृतिकालाकाशप्राणाद्यचिद्वाचकशब्दानां च शरीरिणि परमात्मनि नारायणे पर्यवसानमुपपादयन्त्याचार्याः । वेदान्तज्ञानात् व्युत्पत्तिः पूर्यत इत्युक्तम् । नारायणस्य सर्वशब्दवाच्यत्वं सर्वशरीरकत्वमित्यादिकं तूपरि ईश्वरपरिच्छेदे प्रतिपादयाम ॥ इति शब्दो निरूपितः ॥

इति श्री वाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शारीरकपरिभाषायां शब्दनिरूपणं नाम

तृतीयोऽवतारः ॥



---

योग्यता । यत्पदार्थयोरन्वयबाधो विवक्षितः, तद्वाचकपदयोरव्यवधानेनोपस्थितिरासत्तिः । इति स्वरूपविवेक आकाङ्क्षादेः । वाक्यमिति । वाक्यघटकं पदजातमितिविवक्षितम् । रूढ्यादीत्यत्रादिपदेनयोगरूढिर्ग्राह्या । गङ्गायामिति । प्रवाहे घोषाधिकरणत्वस्यबाधात् गङ्गापदस्य तीरे लक्षणा । सिंह पदस्य गौणीवृत्तिरिति शेषोऽनन्तरवाक्ये । 'सविशेषे'ति । नानापदार्थसंसर्गावबोधकत्वात् सविशेषविषयकत्वं भेदविषयकत्वं च सर्वेषां वाक्यानां सिद्ध्यतीत्यर्थः । 'शरीरे'ति । देवो मनुष्य इत्यादि शरीरवाचिशब्दानां यथा तत्तच्छरीरविशिष्टेजीवेऽभिधावृत्तेः पर्यवसानं दृष्टं लोकवेदयोः, तथैव चिदचिद्वाचिशब्दानां चिदचितां परमात्मशरीरत्वात्तत्तच्छरीरविशिष्टे परमात्मनि पर्यवसानं निरूपयन्ति पूर्वाचार्याः श्रीमद्भाष्यकारप्रभृतय इत्यर्थः । 'वेदान्ते'ति । वेदान्ते परमात्मशरीरत्वं चिदचितोः,तस्य च तदात्मत्वं प्रतिपाद्यते । शरीरस्य चात्माधीनस्वरूपस्थितिकतयाऽऽत्मपारतन्त्र्यलक्षणमात्माऽपृथक्सिद्धवि-

## ॥ अथ चतुर्थोऽवतारः ॥

प्रमाणनिरूपणानन्तर प्रमेय निरूप्यते । प्रकर्षेण मेय प्रमेयम् । तच्च द्विविधम् । द्रव्याद्रव्यभेदात् । उपादानं द्रव्यम् । अवस्थाश्रयं उपादानम् । ननु द्रव्यगुणकर्मसामान्य विशेषसमवायाभावा. सप्त पदार्था इति मतान्तरस्थैः सप्तधा परिगणनात् कथ द्रव्याद्रव्यभेदेन द्विधा समर्थनमितिचेत्; उच्यते । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् कर्म पञ्चधाऽवस्थितमिति कल्पने गौरवात्, चलनात्मक कर्मेत्येकधैवोपपत्तेः, तस्यापि सयोगमादायैवोपपत्तेः । सस्थानमेव जातिरिति सस्थानातिरेकेण सामान्यानङ्गीकारात् । सम-

---

शेषणत्वमवगम्यते । अपृथक्सिद्धप्रकारवाचकाना च शब्दाना धर्मिपर्यन्तबोधकत्वमाकृत्यधिकरणे स्थापितम् । यथा गवादिजातिपदस्य व्यक्तिपर्यन्तबोधकत्वम् । नामरूपव्याकरणश्रुतिश्च सर्वेषा पदार्थाना नामरूपयो परमात्मपर्यन्तत्वमाह । तथा च सर्वेषा पदाना परमात्मपर्यन्तवाचकत्व सिद्ध्यति । विशेष्यस्य परमात्मनो वेदान्तश्रवणात् प्रागप्रतीते वाच्यैकदेशे लोकतो व्युत्पत्ति बोधकत्वबुद्धि. पदानाजाता । वेदान्तज्ञानाच्च सापूयते—तत्तत्पदार्थद्वारा तद्विशिष्टपरमात्मपर्यन्त—बोधकत्वविषयिणी क्रियत इत्यर्थ । निरूपितश्चायमर्थः चराचरव्यपाश्रयस्त्विति सूत्रभाष्यादौ ॥

॥ इति तृतीयावतार व्याख्या ॥

## ॥ अथ चतुर्थावतार व्याख्या ॥

**'प्रकर्षेणे'**ति । यथार्थत्वेनेत्यर्थ । **'अवस्थे'**ति । आगन्तुकोऽपृथक्सिद्धो धर्मोऽवस्था । यथा मृदः पिण्डत्वघटत्वादिः । भाव्यवस्थावत पूर्वावस्थावत्त्वमुपादानत्वम् । स्वसामानाधिकरण्यस्वपूर्वत्वोभयसम्बन्धेनावस्थाविशिष्टावस्थावत्त्व मिति निष्कर्ष. । मतान्तरस्थै'–तार्किकै । चलनात्मक कर्मेत्यकाधिमेव कर्म । तस्योर्ध्वाध प्रभृति तत्तत्प्रदेशविशेषसयोगरूपफलभेदनिबन्धन पर मुत्क्षेपणभ्रमणादिव्यपदेशभेद. । इति भावः । **'तस्यापि'** इति । कर्महेतुभिर्यत्नादिभिः पूर्वदेशविश्लेषो-

त्राये समवायान्तराङ्गीकारेऽनवस्थानात्, तत्रापि संयुक्तविशेषण (तयैवा)तामादायोपपत्तेः । जीवेश्वरयोरणुत्वविभुत्वादिविभाजकधर्ममन्तरेण 'विशेष' इति किञ्चित्पदार्थाङ्गीकारे गौरवात् । अतः कर्मसामान्यविशेषसमवायानां पृथक्पदार्थत्वेनानङ्गीकाराच्च द्रव्यमद्रव्यमिति द्विधा विभाग उपपद्यते । एतेनाभावस्सप्तमपदार्थ इत्यपि निरस्तम् । अभावस्य भावान्तररूपत्वात् । प्रागभावो नाम पूर्वावस्थापरम्परा, ध्वंस उत्तरावस्थापरम्परा, अत्यन्तान्योन्याभावौ च धर्म्यन्तर (गतविशेष) स्वरूपावेव । एतस्य प्रत्यक्षेऽन्तर्भावः पूर्वमुक्तः । उपादानं द्रव्यमित्युक्तम् । गुणाश्रयो द्रव्यमित्यपि सामान्यलक्षणं सम्भवति ।

---

त्तरदेशसंयोगनैरन्तर्यमेव चलनस्थले उपलभ्यते । तत्र तदतिरिक्तं कर्म कल्पनीयमित्याशयः । उत्तरदेशसंयोगातिरिक्तस्य तद्धेतोः कर्मणः स्फुटमुपलम्भे सति तु स्यान्नामतदपि अतिरिक्तमेकादशमद्रव्यमिति च पक्षभेदो वर्णितः तत्त्वमुक्ताकलापे। सामान्यमित्यतिरिक्तं पदार्थं निरस्यति काणादाभिमतं 'संस्थानमेव' इति। स्वासाधारणाकारः संस्थानम् । तदेव सामान्यम् । तच्च सावयवेषु अवयवसन्निवेशविशेषलक्षणम् । निरवयवेषु तु तत्तदसाधारणधर्म एव । यावत्सु व्यक्तिषु सुसदृशं संस्थानम्, तावत्सु एकजातीयत्वव्यवहारः । ब्राह्मण्यादिकं पुनरदृष्टविशेषलक्षणम् । विशुद्धमातापितृजत्वादिज्ञाप्यं च तत् । नातोऽतिरिक्तं सामान्यं जातिः । 'तस्यापी'ति । समवायस्यापि अपृथक्सिद्धविशेषणस्वरूपत्वमेवेति नातिरिक्तत्वमित्याशयः । विशेषमपि पदार्थान्तरं निरस्यति 'जीवे'ति । नित्यद्रव्याणां परस्परं व्यावर्तको धर्मः विशेषो नाम कल्प्यतेऽतिरिक्तः पदार्थो वैशेषिकैः । तन्न । अणुत्वविशिष्टचेतनत्वादिलक्षणत एव जीवानां परमात्मतो व्यावृत्तिः सिध्यति । तेषां परस्परं व्यावृत्तिस्तु प्रत्यक्त्वपराक्त्वादिरूपतत्तदसाधारणधर्मत एव सेत्स्यति । प्रकृतेस्त्रैगुण्यादेव तदितरव्यावृत्तिसिद्धिः । एवमन्यत्रापि बोध्यम् । अतो न विशेषोऽतिरिक्तः कल्प्य इति भावः । 'पूर्वावस्थे'ति । भावरूपपूर्वावस्थेत्यर्थः । एवमुत्तरावस्थापि भावरूपा बोध्या । 'धर्म्यन्तरे'ति । गोरश्वभेद

तानि च द्रव्याणि षट्, प्रकृति काल शुद्धसत्त्वधर्मभूतज्ञान जीवेश्वरभेदात् । तत्र, जडाजडरूपयोर्विभक्तयोर्मध्ये जडलक्षणमुच्यते । अमिश्रसत्त्वरहित जडमिति । तत् द्विविधम् । प्रकृतिकालभेदात् । तत्र, सत्त्वरजस्तमोरूपगुणत्रयाश्रयरूपा प्रकृतिः । सा नित्या अक्षराविद्यामायादिशब्दवाच्या च । तस्या भगवत्सङ्कल्पाधीनगुणवैषम्यात् कार्योन्मुखावस्था अव्यक्तशब्देनोच्यते । तस्मात् महानुत्पद्यते । स महान् सात्त्विकराजसतामसभेदात् त्रिधाऽवस्थित । महतोऽहङ्कार उत्पद्यते । सोऽपि सात्त्विकाहङ्कारो राजसाहङ्कारस्तामसाहङ्कारश्चेति त्रिविधो भवति । एतेषा त्रयाणा वैकारिकस्तैजसो भूतादिरिति नामान्तराण्यपि सभवन्ति । तेषु वैकारिक इति प्रसिद्धात् तैजससज्ञकराजसाहङ्कारसहकृतात्सात्त्विकाहङ्कारादेकादशेन्द्रियाणि जायन्ते ।

---

गोवृत्तिसास्नादिसस्थानविशेष । जडे चैतन्याभावो जडत्वमेवेतिभावः । 'धर्म्यन्तरस्वरूपावेवेति पाठान्तरम् । 'गुणाश्रय' इति । गुणोऽद्रव्यम् । गुणाश्रयत्व द्रव्यस्यलक्षणम् । सयोगाश्रयत्वमपि तथा बोध्यम् । 'गुणाश्रयो वा द्रव्यमिति' इति पाठान्तरम् ।

'तत्रे'ति । द्रव्ये जडमजड मितिद्विधाविभाग. । विभक्तयोर्जडाजडयोर्मध्ये जडस्य लक्षणमुच्यत इत्यर्थः । 'अमिश्रे'ति । अमिश्रसत्त्व शुद्धसत्त्वम् । तद्रहित द्रव्य जडमिति स्वरूपकथनम् । न तु लक्षणम्, जीवादावतिव्याप्ते ।जडस्य लक्षणत्वस्वयम्प्रकाशत्वम् । नियमेन परायत्तप्रकाशत्वमित्यर्थ । 'सेति' प्रकृति. गुणत्रयसाम्यावस्थेत्युक्तावपि— गुणत्रयस्य साम्यावस्था यत्रेति साम्यावस्थगुणत्रयवतीसा बोध्या । प्रकृतेर्गुणत्रयवत्त्व नित्यत्व च 'त्रिगुण तज्जगद्योनिरनादिप्रभवाप्ययम्' 'नित्या सततविक्रिया' इत्यादिश्रुतिस्मृतिसिद्धम् । नित्यत्वमक्षरत्वम् । अध्यात्मज्ञानविरोधित्वादविद्यात्वम्, विचित्रार्थसृष्टिकरत्वान्मायात्व चास्या शास्त्रेषु वर्णितमिति बोध्यम् । 'स महा'निति । उद्रिक्तसत्त्वप्रधानाशो महान् सात्त्विक इत्यादि बोध्यम् । मनसाऽध्यवसायेजनयि-

सात्त्विकाहङ्कारोपादानक द्रव्यमिन्द्रियमितीन्द्रिय लक्षणम्। इन्द्रियं द्विविधम्-ज्ञानेन्द्रियं कर्मेन्द्रियं चेति। ज्ञान-प्रसरणशक्तमिन्द्रिय ज्ञानेन्द्रियम्। तत् षोढा-मन श्रोत्रचक्षु-र्घ्राणरसनात्वग्भेदात्। स्मृत्यादिकरणमिन्द्रिय मनः। तच्च हृदयप्रदेशवर्ति बुध्यहङ्कारचित्तादिशब्दवाच्यम्, बन्धमोक्ष-हेतुभूत च। शब्दादिपञ्चके शब्दमात्रग्रहणशक्तमिन्द्रिय श्रोत्रे-न्द्रियम्। तन्मनुष्यादीना श्रवणकुहरवर्ति। द्विजिह्वादीना नयनवर्ति। एव रूपमात्रग्रहणशक्तमिन्द्रिय चक्षु सर्वेषा नयनवर्ति। गन्धमात्रग्रहणशक्तमिन्द्रिय घ्राणेन्द्रियम्, नासा-ग्रवर्ति। (गजादे कराग्रवर्ति)। रसमात्रग्रहणशक्तमिन्द्रिय रसनेन्द्रियम्, जिह्वाग्रवर्ति। स्पर्शमात्रग्रहणशक्तमिन्द्रिय

---

तव्ये सहकारी महान्। महतस्त्रैविध्य विष्णुपुराणे वर्णितम्। 'महतो-ऽहङ्कार' इति। यद्यपि महदहङ्कारयोस्तत्त्वान्तरत्व परैर्न मन्यते। पर तु सुबालोपनिषदादिषु स्पष्टमेव चतुर्विंशतितत्त्वाना कीर्तनात्तावपि स्वीकर्तव्यावेव। एवमेव गोलकातिरिक्तमिन्द्रिय तन्मात्राश्च। उक्त च वेदान्ताचार्यै 'स्वच्छन्देनागमेन प्रकृतिमहदहङ्कारमात्राक्षसिद्धिर्नाध्य-क्षेणाप्रतीतेर्न पुनरनुमया व्याप्तिलिङ्गाद्यसिद्धे' इति। अव्यक्तावस्था-नाशरूपाऽहङ्कारावस्थाप्रागभावरूपा च याऽवस्था, तद्वत्त्व महतो लक्षणम्। महत्त्वावस्थाव्यवहितोत्तरावस्थावत्त्व चाहङ्कारस्य लक्षण बोध्यम्। अहङ्कारो देहात्माभिमानस्वातन्त्र्याभिमानहेतुमनोवृत्तेरनु-ग्राहको मत.।

'तच्चे'ति। मन एवाध्यवसायाभिमान चिन्तालक्षणधर्मभूतज्ञाना-वस्थाहेतुव्यापारवत्त्वेन बुद्ध्यहङ्कारचित्तशब्दवाच्य 'मन एव मनु-ष्याणा कारण बन्धमोक्षयोः। बन्धाय विषयासङ्गि मुक्त्यै निर्विषय पुन ॥' इति निरुक्तरीत्या जीवात्मना बन्धमोक्षप्रयोजक च वर्तते इत्यर्थ.। एतेनान्त. करणचतुष्टयवादिनः, अध्यवसायादीनामनोधर्मत्व च वदन्तः कापिलादयो निरस्ता.। 'शब्दादिपञ्चक' इति। श्रोत्रेणाल्प-कत्वादेर्वर्णधर्मस्यापि ग्रहणादसम्भवः स्यात्। तद्वारणाय शब्दादिपञ्चके

त्वगिन्द्रियम् । सर्वशरीरवर्ति । नखदन्तकेशादिषु प्राणमान्द्यतारतम्यात् स्पर्शानुपलम्भ । श्रोत्रादीन्द्रियाणा भौतिकत्वप्रतिपादन भूताप्यायितत्वेनौपचारिकम् । एतेषा विषयसम्बन्ध. क्वचित्संयोग, क्वचित्संयुक्ताश्रयणमिति वृद्धसम्प्रदायः । उच्चारणादिष्वन्यतमक्रियाशक्तत्वं कर्मेन्द्रियसामान्यलक्षणम् । तच्च, वाक्पाणिपादपायूपस्थभेदात् पञ्चधाऽवस्थितम् । वर्णोच्चारणकरणमिन्द्रिय वाक् । सा च हृत्कण्ठजिह्वामूलतालुदन्तोष्ठनासामूर्धरूपस्थानाष्टकवर्तिनी । (मूका) मृगादिष्वदृष्टविग्रहात्तदभाव । शिल्पकरणमिन्द्रिय पाणिः । स च मनुष्यादीनामङ्गुल्यग्रवर्ती । वारणादीना नासाग्रवर्ती । सचरणकरणमिन्द्रिय पाद । स च मनुष्यादीना चरणवर्ती । भुजगपतगादीना मुर पक्षादिवर्ती । मलादित्यागकरणमिन्द्रिय पायुः । स च तत्तदवयववर्ती । आनन्दविशेषकरणमिन्द्रियमुपस्थः। स च मेहनादिवर्ती । एतानीन्द्रियाण्यणूनि । परकायप्रवेशे लोकान्तरगमनादिषु च जीवेन सह गच्छन्ति ।

---

र्तीति विशेषणमुक्तम् । मनस्यतिव्याप्तिवारणाय मात्रपदम् । द्विजिह्व सर्प चक्षु श्रवाः । एकस्मिन्नेवस्थाने चक्षुश्रोत्रे तस्यस्थः । '**नखे**'ति । प्राणसञ्चारे मन्दे ईषत्स्पर्शग्रह, । अत्यन्तमान्द्ये च तस्य, स्पर्शाग्रह । नन्विन्द्रियाणा माहङ्कारिकत्वे भौतिकत्व स्मृत कथङ्घटत इत्यत्राह '**श्रोत्रादी**'ति । श्रोत्रादीनामाकाशादिभूतांशै पोषण भवतीति भूताप्यायितत्वपरं भौतिकत्व वचनमिति भाव. । भूताप्यायितृत्वेनेति पाठे भूताना पोषकत्वेनेत्यर्थो वाच्य. । आप्यायितत्वम्—पोषितत्वम् । '**वृद्धसम्प्रदाय**' इति । तथा चाहुः भट्टपराशरपादास्तत्त्वरत्नाकरे 'अत्र वृद्धा विदामासु सयोगं सन्निकर्षणम् । सयुक्ताश्रयण चेति यथासम्भवमूह्यताम् ।। इति । '**जीवेन सहे**'ति । 'तमुत्क्रामन्त प्राणोऽनूत्क्रामति । प्राणमनूत्क्रामन्त सर्वेप्राणा अनूत्क्रामन्ति' 'गृहीत्वैतानि सयाति' ( गीता ) इति श्रुतिस्मृतितः सर्वेषामिन्द्रियाणा जीवेन सह गमन सिद्धम् ।

इन्द्रियाणां मुक्तिदशायामप्राकृतदेशगमनाभवत्वादिहैव यावत्प्रलयं स्थितिः । करणविधुरैरन्यैः परिग्रहो वा । कर्मेन्द्रियाणां शरीरनाशान्नाश इति पक्षस्तु भाष्यादिविरोधेन हेयः ।
एतेन पुरुषेन्द्रियैस्त्रीन्द्रियपृथक्केन्द्रियवादः स्वर्गिन्द्रियैकत्वस्वीकार इत्यादिविमतपक्षा निरस्ताः

राजसाहङ्कारसहकृतात्तामसाहङ्कारात्भूतादिसंज्ञकात्तामसाहङ्कारात् शब्दादिपञ्चतन्मात्राणि आकाशादि पञ्च महाभूतानि चोत्पद्यन्ते । भूतानामव्यवहितसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रम् । तदेव भूतोपादानम् । विशिष्टशब्दादिविषयाधिकरणं भूतम् । तन्मात्राणि, शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रमिति पञ्च । भूतानि च तथा, आकाशं वायुस्तेज आपः पृथिवीति भेदात् । तत्र तामसाहङ्काराकाशयोर्मध्यमावस्थाविशिष्टं द्रव्यं शब्दतन्मात्रम् । क्षीरदध्नोरन्तराल (कलिल) परिणामवत् । तस्मादाकाशो जायते । अस्पर्शवत्त्वे सति विशिष्टशब्दाधारत्वम्, श्रोत्राप्यायकत्व

'भाष्यादिविरोधेन हेयः' इति । अत्र 'भाष्यविरोधेन नेयः' इति, 'भाष्याविरोधेन ज्ञेयः' इति च पाठान्तरमुपलभ्यते । यथाश्रुत मूलार्थः स्फुट एव । भाष्यादौ एकादशानामपीन्द्रियाणां शरीरं परित्यज्य देहान्तरं प्रति जीवस्य गमने सह तेन गमनस्य प्रतिपादनात् । पाठान्तरे तु अन्वारुह्यवादत्वेन नेतव्य इत्यर्थः । शरीरेण सहोत्पत्तिः —कर्मेन्द्रियाणां शरीरनाशान्नाशश्चयादत्रप्रकाश्यते । 'द्रव्यं तन्मात्रमिति' । एतेन शब्दादीनां गुणानामेव तन्मात्रत्वमिति मतं निरस्तम् । 'तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रतास्मृता' (वि० पु० ) इति सूक्ष्मशब्दादिविशिष्टानां भूतसूक्ष्माणां तत्त्वानामेव तन्मात्रत्वस्योक्तत्वात् । 'विशिष्टे' ति । शान्तत्वघोरत्वमूढत्वरूपविशेषविशिष्टशब्दादिविषयाधिकरणं भूतमित्यर्थः । तन्मात्रेषु तु शब्दादिगुणमात्रं वर्तते शान्तत्वादिविशेषरहितम् । तच्च सूक्ष्मं सुखैकहेतुर्देवोपभोग्यमिति साङ्ख्यदर्शने वर्णितम् । अन्तरालपरिणामवत्—क्षीरत्वदधित्वमध्यवर्तिकलिलावस्थारूपं परिणाम

चाकाशलक्षणम् । स च शब्दमात्रगुणकः अवकाशहेतुः । नीलं नभ इति प्रतीतेः प्रत्यक्षः । पञ्चीकरणप्रक्रियया च सावयवो रूपवान् (रूपवांश्च) । एतेन आकाशस्याजन्यत्वनिरासः । सूर्यपरिस्पन्दयुक्ताकाशस्यैव (सूर्यपरिस्पन्दादिभिराकाशस्यैव) प्राच्यादिव्यवहारोपपत्तौ दिगिति न पृथग्द्रव्यकल्पनम् । दिक्सृष्टिस्त्वन्तरिक्षादिसृष्टिवदुपपद्यते ।

आकाशात् स्पर्शतन्मात्रम् । आकाशवाय्वोर्मध्यमावस्थाविशिष्टं द्रव्यं स्पर्शतन्मात्रम् । तस्माद्वायुः । विशिष्टस्पर्शवत्त्वे सति रूपशून्यत्वम्, अस्मदादिस्पर्शनैकेन्द्रियग्राह्यद्रव्यत्वम्, अनुष्णाशीतविशिष्टस्पर्शवत्त्वे सति रूपशून्यत्व-

---

इव । 'अस्पर्शत्वे सती'ति । वाय्वादावतिव्याप्तिवारणाय सत्यन्तम् । शब्दतन्मात्रेऽतिव्याप्तिवारणाय विशिष्टेति शब्दविशेषणम् । श्रोत्रपोषकत्वं चाकाशस्य स्वांशैः । एतेन—सावयवत्वसमर्थनेन । 'अजन्यत्वनिरास' इति । आकाशस्य निरवयवत्वादजन्यत्वमिति तार्किकवादनिरास इत्यर्थः । तस्योत्पत्तिलयप्रतिपादकशास्त्रविरोधश्च तन्मते । दिशस्तत्त्वान्तरत्वं निरस्यति 'सूर्ये'ति । प्राच्यादिव्यवहारविषयत्वमाकाशस्यैव सूर्यपरिस्पन्दाद्युपाधिभिरिति नातिरिक्तदिक्कल्पनमित्यर्थः । परिस्पन्दः गतिभेदः । आदिपदेन सूर्यदर्शनादर्शनयोर्विवक्षा । प्रातर्यत्राकाशप्रदेशे सूर्यः सञ्चरन् प्रथमतो दृश्यते, सैव प्राची । तत्सन्निकृष्टं च मूर्तं पूर्वमित्युच्यते । सायं यत्राकाशप्रदेशे सूर्यः सञ्चरन् दृश्यते, अस्तम्—अदर्शनमुपयाति च, सैव प्रतीची । तत्सन्निकृष्टं च मूर्तं पश्चिममित्युच्यते । उदयकाले सूर्याभिमुखस्य पुंसो दक्षिणपार्श्वीयाकाशप्रदेशोऽवाची । तस्यैव वामपार्श्वीयाकाशप्रदेश उदीची, इति दिग्विभागः कार्यः आकाशप्रदेशैरेव । तार्किकैरतिरिक्तदिक्कल्पनेऽपि तस्या विभुत्वनित्यत्वैकत्वानां तैः स्वीकृतत्वादुपाधिभेदैरेव पूर्वादिकल्पना कार्या । गौरवं त्वधिकं तेषां प्रसज्यत इति भावः । ननु दिशोऽतिरिक्तत्वाभावे 'दिशः श्रोत्रा'दिति आकाशात् पृथक् तत्सृष्टिश्रुतिः कथं घटत इत्यत्राह 'दिक्सृष्टि'रिति । यथाऽन्तरिक्षस्याकाशत्वेऽप्यवान्तरविशेषविवक्षया पृथक् सृष्टिः श्रूयते, एवमेव दिशामपीति भावः ।

मित्यादिकं वायोर्लक्षणम् । तस्मिन् नानासलिलातपकुसुमादि (अवयव) योगात् शीतोष्णसौरभादिव्यपदेशः । स च त्वगि-न्द्रियाप्यायकत्वेनोपकरोति । तस्य शब्दस्पर्शौ गुणौ । तत्र, शरीरधारणादिहेतुर्वायुविशेषः प्राणः । स च पञ्चप्रकारः । प्राणापानव्यानोदानसमानभेदात् । हृदि प्राणः, गुदेऽपानः; सर्वशरीरगो व्यानः, कण्ठे उदानः, नाभिदेशे समानः इति नियमो जङ्गमेष्वेव ।१ स्थावरेषु तु प्राण सम्बन्धस्स्वल्प एव । वायोस्स्पार्शनप्रत्यक्षत्वेनानुमेयवादनिरासः । । वायुतेजसोर्म-ध्यमावस्थाविशिष्टं द्रव्यं रूपतन्मात्रम् । तस्मात्तेजः । उष्ण-स्पर्शवत्त्वभास्वररूपवत्त्वादिकं तु तेजसो लक्षणम् । तस्य बहि पचनादिहेतुत्वमग्निसूर्यात्मना, अन्तर्वैश्वानरसंज्ञकजाठ-राग्निरूपेण । दिवाभीतादिव्यतिरिक्तानां चाक्षुषज्ञाने आलो-कद्वारा सहकारि च भवति ॥ तच्चतुर्धा । भौमं दिव्यमुदर्य-

---

'**विशिष्टे**'ति । शान्तत्वादिविशेषविशिष्टेत्यर्थः । उद्भूतत्ववि-शिष्टेति वा । इदं च विशेषणं स्पर्शतन्मात्रेऽतिव्याप्तिवारणाय । तेजः प्रभृतावतिव्याप्तिवारणाय विशेष्यम् । वायोर्लक्षणानन्तरमाह '**अस्म-दादी**'ति । स्पर्शनं त्वक् । त्वगिन्द्रियमात्रग्राह्यद्रव्यत्वं वायोर्लक्षण-मित्यर्थः । अस्मदादेरिति स्पष्टार्थम् । नित्यमुक्तानां व्यावृत्त्यर्थं वा । तेषां हि विषयग्रहणे नेन्द्रियनियमः । रूपशून्यत्वमित्यत्र गन्धशून्य त्वमिति पाठः स्वरसः । '**हृदी**'ति । 'हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥' इत्यभि-युक्ताः । प्राणः प्राग्गतिः, अपानोऽधोगतिः, भुक्तपीतान्नरसादेः साम्य-कृत् समानः, उदानः उत्क्रमणकारकः, व्यानः सर्वाङ्गचेष्टाहेतुः इति च वृत्तिभेदः प्राणादेर्बोध्यः । पञ्चस्वेतेष्वन्तर्गताः पञ्चान्ये भेदा योगशा-स्त्रादौ वर्णिताः सन्ति नागकूर्मकृकलदेवदत्तधनञ्जया इति । तत्र नागः उद्गारकारकः, कूर्मः उन्मीलनकरः, कृकलः क्षुत्कारकः, देवदत्तो जृम्भणकृत् । धनञ्जयः पोषणकृत् मतः । तत्र नागस्योदाने, कूर्मस्य

---

पाठा १—जङ्गमेष्विव स्थावरेष्वपि प्राणसम्बन्धस्तुल्य एव ।

माकरजं चेति । तत्र पार्थिवमात्रेन्धनं तेजो भौम दीपादि । जलमात्रेन्धन दिव्य सूर्यादि । जलपार्थिवेन्धनमुदर्य जाठ (र)शादि । निरिन्धन तेज आकरजं सुवर्णादि । सुवर्णस्य द्रव्यान्तरससर्गादुष्णस्पर्शाभाव । पुनस्सामान्येन प्रभा प्रभावाश्चेति विभक्तम् । आवरणसदसद्भावाधीनसकोचविकासप्रसारितेजोविशेष प्रभा । सा च प्रभावद्भिस्सहोत्पद्यते, सह नश्यति । द्रव्यरूपा गुणभूता सावयवा च । अनेन प्रभाया केवलगुणत्वमतनिरास । प्रभाविशिष्टं तेजः प्रभावत् । तत् चतुर्विधमिति प्रतिपादितम् । तत्तेज शब्दस्पर्शरूपगुणवच्च । तेजस्सलिलयोर्मध्यमावस्थाविशिष्टं द्रव्य रसतन्मात्रम् । तस्मादाप । शीतस्पर्शवत्त्व निर्गन्धत्वे सति विशिष्टरसवत्त्वमित्यादि अपां लक्षणम् । तासां शुक्लमधुरशीतैकस्वभावाना आश्रयादिसंसर्गभेदाद्रूपरसस्पर्शवैचित्र्यारोपः । ताः समुद्रसरिदादिरूपेण बहुप्रकाराः । शब्दस्पर्शरूपरसगुणाश्च । सेचनपिण्डीकरणादिहेतवश्च । अप्पृथिव्योर्मध्यावस्थाविशिष्ट द्रव्य गन्धतन्मात्रम् । तस्मात् पृथिवी । विशिष्टगन्धवत्त्वम्, रसवत्त्वे सति अनुष्णाशीतस्पर्शवत्त्वमित्यादि पृथिवीलक्षणम् । सा सुरभिः मधुरा कृष्णरूपानु-

---

व्याने, कृकलस्यापाने, देवदत्तस्य प्राणे, धनञ्जयस्य समाने चान्तर्भावोऽभिहितोऽभियुक्तै । वायो स्पर्शानुमेयत्व तार्किकाभिमत निरस्यति **'वायो'**रिति । बहिरिन्द्रिय जन्यद्रव्यप्रत्यक्षमात्रे रूप कारणमिति तार्किका मन्यते । तन्नयुक्तम् । चाक्षुष प्रति रूपस्योद्भूतस्य, स्पार्शन प्रति उद्भूतस्पर्शस्य कारणत्वमित्येवानुभवानुसारिणी व्यवस्था साधीयसीति हार्दम् । **'सुवर्णस्ये'**ति । सुवर्णगततैजसस्पर्शस्य तदन्तर्गतपार्थिवांशस्पर्शेनाभिभूतत्वादुष्णत्वस्याग्रह इति भावः । **'द्रव्यरूपे'**ति । भास्वररूपवत्त्वात् प्रसरणशीलत्वाच्च प्रभा द्रव्यमेव । गुणत्व च नियमेन पराश्रितत्वात्तस्या विवक्षितम् । केवलगुणत्वम्—द्रव्यभिन्नगुणत्वम् । तेजः

ष्णाशीतस्पर्शवती। पाकभेदात् (पाकजभेदात्) विचित्र-वर्णगन्धरसा च। मनोघ्राणाप्यायकत्वेनोपकरोति। मृत्पाषाणान्नौषधादिबहुप्रकारवती। शब्दस्पर्शरूपरसगन्धगुणका। धारणहेतुश्च। तमस पृथिव्यामन्तर्भावः। तद्गुणकत्वात् तदवस्थान्तरत्वाद्वा। अत एव आलोकाभावमात्रम् तम, न द्रव्यान्तरमित्यादिपक्षा निरस्ता।

भूतेषु सर्वत्र पञ्चीकरणप्रक्रियया शब्दादीना गुणानामुपलम्भः। पञ्चीकरणप्रक्रिया तु, भगवान् भूतानि सृष्ट्वा एकैकमेव भूत द्विधा कृत्वा द्वयोर्भागयोः स्वभागमेक निधाय भागान्तर चतुर्धा करोति। तान् चतुर्भागान भूतान्तरेषु चतुर्षु योजयति। एव सर्वेषु भूतेषु क्रियमाणेषु एकैकस्य भूतस्यार्ध स्वभाग, अर्धान्तर चतुर्णा भूताना भागसमुच्चयो भवति। तथाच स्वभागस्य भूयस्त्वात् परभागस्याल्पीयस्त्वाच्च पृथिव्यादिव्यपदेश.। वेदे त्रिवृत्करणोपदेशस्तु पञ्ची-

---

चक्षुषो वागिन्द्रियस्य चाप्यायकम्। आपश्च मना प्राणरसनघ्राणाप्यायिका।

'तमसः' इति। तम. पार्थिव नीलरूपवत्त्वात्। स्पर्शानुद्भवाच्च तस्य न गतिप्रतिरोधकत्वम् इति बोध्यम्। तमसि मतान्तर निरस्यति 'अतएवे'ति। आरोपित नीलरूपमेव तम इति न्यायकन्दलीकारमतम्। आलोकाभावस्तम इति च काणादमतम्। उभयमपि प्रतीतिविरुद्धम्। अभिहितं च श्रुत्यन्तगुरुचरणै. 'नैल्याद्भौम तमिस्र चटुलबहलताद्यन्वयात्तन्न नैल्यम्' इति। द्रव्यान्तर तम इति कौमारिलानां मतम्। तथाचोक्त 'तमः खलु चल नील परापरविभागवत्। प्रसिद्धद्रव्यवैधर्म्यान्नवभ्योभेत्तुमर्हति॥' इति (श्लो० वा०)। गौरवादेव मतमेतन्न साधीय इति बोध्यम्।

**भूतेष्विति**। एक भूतगुणस्य ततोभिन्ने भूतान्तर उपलम्भ. पञ्चीकरणात्। अत्र गुणपद भूतान्तरांशानामप्युपलक्षणम्। अन्ये

करणस्याप्युपलक्षणम् । भूतैस्साक महदहङ्कारौ मिलित्वा सप्तीकरणमित्यप्याहुः । एतेषु चतुर्विंशतिसंख्याकेषु पञ्च भूतानि प्रकृतिमहदहङ्काराश्च शरीरोपादानानि । एकादशेन्द्रियाणि प्रत्येकमसंख्यातानि प्रतिपुरुष भिन्नानि आभरणार्पितरत्नानीव शरीरमाक्रम्य तिष्ठन्ति ।

शरीर नाम चेतनं प्रत्याधेयत्वविधेयत्वशेषत्वनियमै॰पृथक्सिद्धो द्रव्यविशेष इत्येकं लक्षणम् । नियमेन यदा-

---

जलाशप्रतीतेः । अग्निज्वालाया जलगतश्वेतरूपस्य पृथिवीगतकृष्णरूपस्याप्युपलब्धेश्च । आकाशे नीलोपलब्धिश्च ततएव । शब्दस्य सिद्धान्ते पञ्चभूतगुणत्वम् । आकाशस्यैव गुण॰ शब्द इति मतान्तरम् । तदनुसारेणात्र शब्दादीनामित्युक्तम् । एलादिसम्कृते उष्णे च जले गन्धोष्णस्पर्श प्रतीतिस्तु द्रव्यान्तरससर्गप्रयुक्ता । अत्र न पञ्चीकरणस्योपयोगः । पञ्चीकरणेनाकाशस्य रूपिद्रव्यसहतत्वाच्चाक्षुषापपत्ति । पञ्चीकरण नाम पञ्चसुभूतेषु एकैकस्यापि भतस्य भूतान्तराशै सम्मिश्रीकरणम् । तत्रतत्रभूते स्वाशोऽर्धभाग । अन्यभूतचतुष्टयाष्टमाश चतुष्टय च सम्मिलितं मदपरमर्ध सम्पद्यते । विष्णुपुराणादौ पञ्चीकरण वर्णितमस्ति । यथा—'एव जातेषु भूतेषु प्रत्येक स्युर्द्विधातत । चतुर्धाभिन्न मेकैकमर्धमर्धं तथास्थितम् ।। व्योम्नोऽर्धभागाश्चत्वारो वायुतेजः पयोभुवाम् । अर्धानियानि वायोस्तु व्योमतेज. पयोभुवाम् ।।' इत्यादिना । छान्दोग्योक्त त्रिवृत्करण पञ्चीकरणस्योपलक्षणम् । **एतेष्वि**ति। 'अष्टौप्रकृतय.' 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेवच' इति श्रुतिस्मृतित शरीरोपादानान्यष्टौ । शरोराश्रिताश्चषोडश विकाराः—एकादशेन्द्रियाणि, शब्दादयश्च पञ्चविषया इति 'षोडशविकाराश्शरीरे' 'इन्द्रियाणि दशैकं च पञ्चचेन्द्रियगोचरा' इति प्रतिपादिता । '**एकादशे**'ति । तैजससहकृताहंकारिकात् समष्टिरूपाण्येकादशेन्द्रियाणि जायन्ते । तत्तदंशैश्च प्रत्यात्ममेकादशैकादशेन्द्रियाणि व्यवस्थितानिवर्तन्ते । आत्मानन्त्यात्तानीमानि व्यष्टीन्द्रियाण्यनन्तानि—असङ्ख्यातानि सन्तीति भावः ।

पाञ्चभौतिक देवमनुष्यादि जीवाना शरीर प्रसिद्धमेव । अव्यक्तादीनामीश्वरशरीरत्व च **शास्त्रसिद्धम्** । अत. सर्वशरीरानुगत शरीरलक्षणमाह '**शरीर**'मिति । चेतनेन ज्ञानावच्छिन्नेनात्मना नियमेन धार्य

ध्येयम्, नियमेन यद्विधेयम्, नियमेन यच्छेषम्, इति लक्षणत्रयं वा योज्यम्। ईश्वरतज्ज्ञानव्यतिरिक्तद्रव्यमिति वा तटस्थलक्षणम्। एतेन चेष्टाश्रयश्शरीरम्। इन्द्रियाश्रयश्शरीरम्। भोगायतनं शरीरम्। शिरःपाणिपादादिमय शरीरमित्यादीनि परोक्तानि शरीरलक्षणानि निरस्तानि।[१]

---

प्रवर्त्यं च द्रव्यं न चेतनं प्रतिशरीरं भवति, तथा चेतनस्य नियमेन—यावत्सत्तं शेषभूतं च द्रव्यम्। नियमेनधार्यत्वादिश्चापृथक्सिद्धि प्रकारविशेषः। तथा च फलितं चेतनापृथक्सिद्धप्रकारभूतं द्रव्यं शरीरमिति। चैतन्यावच्छिन्नानुयोगिताकापृथक्सिद्धि सम्बन्ध प्रतियोगित्वविशिष्टद्रव्यत्वं शरीरत्वमिति निष्कर्षः। ज्ञानस्यात्मापृथक्सिद्धविशेषणद्रव्यत्वेऽपि तदपृथक्सिद्ध्यनुयोगितायाः आत्मनिष्ठायाः ज्ञानावच्छिन्नत्वाभावान्न ज्ञानस्य स्वाश्रयमात्मानं प्रतिशरीरत्वं भवति। अयमेकलक्षणपक्षः। लक्षणत्रयपक्षमाह '**नियमेन**' इति। येन चेतनेन यद्द्रव्यं नियमेनयावत्सत्तं धार्यं वर्तते तत्तस्य शरीरम्। येन चेतनेन यद्द्रव्यं नियमेनयावत्सत्तं स्वशक्यार्थे प्रेरयितुं योग्यं वर्तते, तत्तस्य शरीरम्। यस्य चेतनस्ययद्द्रव्यं नियमेन—यवत्सत्तं शेषभूतं तत्तस्य शरीरमिति लक्षणत्रयम्। शेषिणो यथेष्टविनियोगार्हं द्रव्यं शेष इति भगवच्छास्त्रे वर्णितम् 'यथेष्टं विनियोगार्हं शेषशब्देन कथ्यते। विष्णुना च जगत् सर्वं यथेष्टं विनियुज्यते॥' इति। यथामनुष्यादिशरीरं तदन्तर्वर्ति जीवात्मना यावत्सत्तं स्वार्थे धारयितुं स्वशक्यार्थे प्रेरयितुं च योग्यं वर्तते, तस्यैव शेषभूतं च, अतस्तं प्रति शरीरं भवति। भार्यापुत्रस्रक्चन्दनादि तु पृथक्सिद्धत्वान्न नियमेन भोक्तृचेतनाधीनमिति न तच्छरीरत्वं तस्य। सर्वं चिदचिज्जातं च परमात्मना नियमेन धार्यं नियाम्यं तस्यैव शेषभूतं च वर्तत इति परमात्मशरीरं तद्भवति। श्रुतिस्मृतिसिद्धं च भगवच्छरीरत्वं चिदचित्प्रपञ्चस्येति बोध्यम्। स्थापितं चैतच्छ्रीभाष्यादौ। '**ईश्वरे**'ति। तटस्थलक्षणम् कूटस्थलक्षणम्। साधारणमिति यावत्। ईश्वरतज्ज्ञानातिरिक्तद्रव्यत्वं शरीरसामान्यलक्षणमित्यर्थः। विशेषरूपेणास्येदं शरीरमिति व्यवहारव्यवस्थापकं तु शरीरलक्षणं 'यस्य चेतनस्य यद्द्रव्य' मित्यादिना पूर्वोक्तमेवेति बोध्यम्। 'परवादि-भिमतानि शरीरलक्षणानि दूषयति प्रसङ्गतः 'एतेने'ति। 'चेष्टे-

शरीरं द्विविधम्—नित्यमनित्यमिति। तत्र नित्यं त्रिगुणद्रव्यकालजीवशुभाश्रयादिकमीश्वरशरीरम्। नित्यसूरीणां स्वाभाविकं गरुडभुजगादिरूपं च। अनित्यं द्विविधम् अकर्मकृतं कर्मकृतं चेति। प्रथममीश्वरस्य महदादिरूपम्। तथाऽनन्तगरुडादीनां मुक्तानामीश्वरस्य च इच्छागृहीतं तत्तद्रूपम्॥ कर्मकृतमपि द्विविधम्। स्वसंकल्पसहकृतकर्मकृतं केवलकर्मकृतं चेति। पूर्वं महतां सौभरिप्रभृतीनाम्, इतरदन्येषाम्। पुनस्सामान्येन द्विविधम्, स्थावरजङ्गमभेदात्। स्थावरा शिलावृक्षगुल्मादयः। जङ्गमाश्चतुर्धा। देवमनुष्यतिर्यङ्नारकिभेदात्। उद्भिज्जस्वेदजाण्डजजरायुजभेदा अपि विभाजकधर्माः। अयोनिजशरीराण्यपि सन्ति।

---

न्द्रियार्थाश्रयं शरीरम्' इति न्यायसूत्रम्। चेष्टाश्रयत्वम्, इन्द्रियाश्रयत्वम्, भोगायतनत्वमिति शरीरस्यलक्षणत्रयमत्र विवक्षितम्। एतत्त्रयमप्यव्याप्त्यतिव्याप्तिभ्यां न लक्षणं भवितुमर्हति। तथाहि—चेष्टाशब्देन चलनात्मकक्रियामात्रविवक्षायां घटादावतिव्याप्तिः। तस्य तार्किकैः शरीरत्वानभ्युपगमात्। प्रयत्नवदात्मसंयोगासमवायिकारणकक्रियाविवक्षायां च तन्मते परमाण्वादावतिव्याप्तिः, शिलादिशरीरेऽव्याप्तिश्च। इन्द्रियाश्रयत्वं संयोगेन चेत् घटादावतिव्याप्तिः। समवायेन चेदिन्द्रियावयवेष्वतिव्याप्तिः। शरीरेऽसम्भवश्च। स्वजन्यज्ञानावच्छेदकत्वसम्बन्धेनेन्द्रियवत्त्वविवक्षायां च शिलादावव्याप्तिः। एवमर्थाश्रयत्वं शब्देनगन्धादिभोग्यपदार्थाश्रयत्वविवक्षायां कुसुमादावतिव्याप्तिः। स्वविषयकभोगावच्छेदकत्वसम्बन्धेन तद्वत्त्वविवक्षायां च शिलादावव्याप्तिस्तदवस्था। तच्छरीरे सुखाद्यनुभवरूपभोगाभावात्। एतेषां च लक्षणानामीश्वरशरीरत्वेन शास्त्रसिद्धेषु प्रकृतिपुरुषादिष्वव्याप्तिः स्थिरा। एवं पञ्चवृत्तिप्राणाधीनधारणत्वम्, करचरणादिमत्त्वमित्यादिशरीरलक्षणेऽपि अव्याप्त्याद्यनुसन्धेयम्। अतो भाष्यकाराभिमतमेव लक्षणत्रयं साधीयः। महताम्—तपआदिना सिद्धानाम्। स्थावरम्—गतिशून्यम्। जङ्गमम्—गतिशीलम्। 'अयोनिजे'ति। ब्रह्मनारदादिदेवशरीराणां द्रौपदीधृष्टद्युम्नादिमनुष्यशरीराणामैरावतादि-

एवं पञ्चीकृतानां भूतानामेवाण्डोत्पादकत्वम्। अण्डोत्पादात्पूर्वसृष्टिस्समष्टिसृष्टिः। अनन्तरसृष्टिर्व्यष्टिसृष्टिः। महदादीनामुत्पत्तिर्नाम तालपलाशताटङ्कन्यायेनावस्थान्तरापत्तिरेव। सेनावनराश्यादिव्यवहारवत् पूर्वापरावस्थाविशेषसम्बन्धमात्रेण कार्यकारणभेदव्यवहारः। तत्र पूर्वावस्थाप्रहाणेन विजातीयावस्थाप्राप्तौ तत्त्वान्तरव्यपदेशः पृथिवीपर्यन्त एव। इत्थम्, प्रकृतिमहदहङ्कारैकादशेन्द्रियतन्मात्रपञ्चकभूतपञ्चकविभागेन चतुर्विंशतितत्त्वानि वर्णितानि। एतेन न्यूनाधिकसंख्याकतत्त्ववादिनो बाह्याः पाशुपताश्च निरस्ताः परमाणुकारणत्ववादिनोऽपि निरस्ताः।

प्रकृत्यादयः ईश्वरस्य जीवस्य च भोग्यभोगोपकरणभोगस्थानानि च भवन्ति। भोग्यानि विषयाः। भोगोपकरणानि तु चक्षुरादिकरणानि। भोगस्थानानि चतुर्दशभुवनसहितान्यण्डजातानि। अण्डं नाम कपित्थफलाकारं पञ्चीकृतपञ्चभूतारब्धं प्राकृतं द्रव्यम्। तद्यथा—पद्माकारा भूः,

---

तिर्यक्छरीराणामप्ययोनिजत्वमस्ति। उद्भिज्जानां वृक्षादीनामपि तथा। जरायु—गर्भवेष्टनम्। तज्जं पशुनरादिशरीरम्। अण्डजं पक्षिणां शरीरम्। 'उत्पत्ति'रिति। तार्किकमतवत् नासत उत्पत्तिः सिद्धान्ते मता, किं त्ववस्थान्तरापत्तिः सतः। 'सेने'ति। सेनावनादौ तैरपि अवस्थाविशेषातिरिक्तद्रव्यान्तरं नाङ्गीकृतमित्यर्थः। 'कार्ये'ति। पूर्वावस्थकारणम्, उत्तरावस्थतदेव द्रव्यं कार्यम् इति सत्कार्यवादसिद्धान्ते। 'तत्त्वान्तर व्यपदेश' इति। पाञ्चभौतिकानां पदार्थानां पञ्चभूतेष्वन्तर्भावात्र तत्त्वान्तरत्वम्। पृथिव्युत्पत्तिध्वंसप्रागभावालिकोत्पत्तिस्थित्यन्यतरकेष्वेव द्रव्येषु तत्त्वमिति व्यपदेशः। अतः प्रकृतिप्राकृतान्याहृत्य चतुर्विंशतिस्तत्त्वानीत्यर्थः। 'एतेने'ति। सप्तपदार्थी काणादे तन्त्रे। षोडशपदार्थवादोऽक्षपादीयानाम्। षट्त्रिंशत्तत्त्ववादः शैवानाम्। एतेषां निरासो न्यायसिद्धाञ्जनादौ द्रष्टव्यः। परमाणुकारणवादिनः—काणादा बौद्धा आर्हताश्च। ब्रह्ममीमांसायामेतद्वादनिरासः कृतः। स्वतन्त्रप्रकृति

कर्णिकाकारो मेरु । मेरोर्दक्षिणतो भारतकिम्पुरुषहरिव-र्षाणि त्रीणि । उत्तरतो रम्यक हिरण्मक कुरुवर्षाणि त्रीणि । पुरतो भद्राश्ववर्षम् । पश्चात्केतुमालवर्षम् । मध्ये-त्विलावृतम् ।

एवं नववर्षयुक्तं जम्बूद्वीपं लक्षयोजनविस्तीर्णम् सम-परिमाणेन लवणसिन्धुनावृतम् । स सिन्धुर्द्विगुणेन सप्तवर्षा-त्मकेन प्लक्षद्वीपेन वेष्टितः । सोऽपीक्षुसमुद्रेण । सोऽब्धिश्शा-ल्मलिद्वीपेन । स पुनस्सुरासमुद्रेण । स कुशद्वीपेन । स सर्पि-स्समुद्रेण । सोऽपि क्रौञ्चद्वीपेन । स दध्यर्णवेन । सोऽपि शाकद्वीपेन । स च क्षीरार्णवेन । सोऽपि वर्षद्वयविभाजक-वलयाकारमानसोत्तारपर्वतसहितेन पुष्करद्वीपेन । स शुद्ध-जलार्णवेन । एवम्, द्वीपानामुत्तरोत्तारद्वैगुण्य द्रष्टव्यम् । प्लक्षद्वीपादयश्च (पञ्च) सप्तवर्षात्मकाः । सप्तद्वीपात्मकोऽय द्विगुणया काञ्चनभूम्यावृतः । काञ्चनभूमिस्तु लोकालोक-पर्वतेन । स पर्वतस्तमसा, तमो गर्तोदकेन, ततोऽण्डकटाह । 

---

कारणत्वपक्ष. कापिलाना मपि तत्रैव प्रतिक्षिप्त ॥ 'प्रकृत्यादय' इति । ईश्वरस्य विभवादिष्विति बोध्यम् । च शब्देन लीलोपकरणानि चेति सिध्यति । तेनेश्वरस्य लीलोपकरणानि जीवाना भोग्यादिरूपाणि च भवन्ति इत्यर्थोबोध्य । अण्डमिति । चतुर्दशभुवनात्मक ब्रह्माण्डमण्ड-कटाहेन समन्तादावृत कपित्थफलाकारम् । यथोक्त 'एतदण्डकटाहेन तिर्यक् चोर्ध्वमधस्तथा । कपित्थस्य यथाबीज सर्वतो वै समावृतम्' इति ( वि० पु० ) । 'पद्माकारे'ति । यथोक्त 'भूपद्मस्यास्य शैलोऽय-कर्णिकाकार सस्थित. । ( वि० पु० ) । समपरिमाणेन—लक्षणयोजन-विस्तारेण । द्वीपसमुद्रौ समपरिमाणौ । उत्तरद्वीपा पूर्वद्वीपाद्द्विगुणा । यथोक्तम् 'एव द्वीपास्समुद्रैश्च सप्त सप्तभिरावृता. । द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ ॥' (वि० पु०) इति । द्विगुणया । सप्तद्वीपात्मकाद्-भूभागाद्द्विगुणया ।

एव भूमेरधः अतलवितलनितलतलातलमहातलसुतलपाताल-भेदात् सप्तलोका । अधो नरका । ते च पापकर्मणां पापा-नुभवभूमयो रौरवाद्या, मुख्यतया एकविंशतिप्रभेदाः । तत-स्तम ततो गर्तोदकम् । ततोऽण्डकटाहः ।

एवं भूमेरुपरि लक्षयोजनात्सूर्यमण्डलम् । तावदेव भूर्वलोक । तदुपरि चन्द्रमण्डलम् । तस्मादुपर्युपरि नक्षत्र-बुधशुक्राङ्गारकबृहस्पतिशनिसप्तर्षिमण्डलानि । तदुपरि ध्रुव. । सूर्यमण्डलमारभ्य ध्रुवलोकपर्यन्त स्वर्लोक । चतु-र्दशलक्षोपरि कोटियोजनोच्छ्रायो महर्लोक । तस्मात् द्विगुणो जनोलोकः । ततश्चतुर्गुण तपोलोकः । तस्माद्द्वादशकोट्यु-च्छ्रायस्सत्यलोक । ततस्तमो गर्तोदकमण्डकटाहश्च । एवं तिर्यगूर्ध्वप्रमाणेन पञ्चाशत्कोटियोजनत्व भूमेरुक्तं भवति ।

---

तदुपरि—सूर्यमण्डलस्योर्ध्व लक्षयोजनदूरे शशिमण्डलमित्यर्थः । 'भूमेर्योजनलक्षे तु सौर मैत्रेय मण्डलम् । लक्षाद्दिवाकरस्यापि मण्डल शशिन स्मृतम् ॥' ( वि० पु० ) । भूभगोलयोर्विस्तरशो वर्णन भागव-तादिषु कृत वर्तते । '**अण्डकटाह**' इति । इदमेवपृथिव्यावरणम् । साण्ड-कटाह ब्रह्माण्डप्रमाणाद्दशगुणप्रमाण जलावरणम, ततो दशगुण तेज आवरणम् । एव पूर्वावरणादुत्तरावरणस्य दशगुणत्व बोध्यम् । पृथिवी-जलतेजोवाय्वाकाशाहङ्कारमहदावरणानि सप्तावरणानि बोध्यानि । महदावरण चानन्तप्रमाणेनाव्यक्तेनावृतम् । 'अव्यक्तेनावृत मिति वच-नात् । '**जलबुद्बुदव**'दिति । 'न क्रमेण विवृद्ध तत् जलबुद्बुदवत्समम् ।' 'एककालेन सृज्यन्ते' इत्यादिवचनमत्रानुसन्धेयम् ॥ सद्वारिकेति । ब्रह्मा-दिद्वारिकेत्यर्थ ॥

**॥ इति चतुर्थावतार व्याख्या ॥**

## ॥ अथ पञ्चमावतार व्याख्या ॥

'**काल**' इति । गुणत्रयरहितजडद्रव्यत्व कालस्यलक्षणम् । सत्त्व-शून्यजडद्रव्य काल इति लघु लक्षण साधु । '**स चे**'ति । 'अनादिर्भग-वान्कालोनान्तोऽस्य द्विज विद्यते' ( वि० पु० ) इति वचनात् कालस्य

शतकोटियोजनविस्तीर्णत्ववादो मानभेदेन । अण्डकटाहः कोटियोजनोच्छ्रायः । तदण्डं दशोत्तरावरणावृतम् । एतादृशान्यण्डान्यनन्तानि । जलबुद्बुदवद्युगपदीश्वरसृष्टानि । ईश्वरस्य चतुर्मुखपर्यन्ता सृष्टिरद्वारिका । तदनन्तरं सद्वारिकेति विवेकः । विस्तरस्तु पुराणरत्नादिषु द्रष्टव्यः । इति प्रकृतिर्निरूपिता ॥

इति श्री वाधूलकुलतिलक श्रीमन्महाचार्यप्रथमकृपापात्रेण श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शारीरकपरिभाषायां प्रकृतिनिरूपणं नाम चतुर्थोऽवतारः ॥



## ॥ अथ पंचमोऽवतारः ॥

अथाचिद्विशेषः कालो निरूप्यते । कालो नाम गुणत्रयरहितो जडद्रव्यविशेषः । स च नित्यो विभुश्च । भूतभविष्यद्वर्तमानभेदेन त्रिविधः । युगपत्क्षिप्रचिरादिव्यपदेश-

---

नित्यत्वं सिद्धम् । उत्पत्तेः पूर्वं विनाशादनन्तरं च कालो नास्तीति वक्तुमपि न शक्यते । पूर्वानन्तरशब्दयोरपि कालवाचितया कालास्तित्वसिद्धेः । प्रकृतिमण्डले सर्वत्र कालोऽस्त्येव । 'कालः स पचते तत्र न कालस्तत्र वै प्रभुः' इति वचनान्नित्यविभूतावपि कालसत्ता प्रतीता । अतः कालस्य विभुत्वं सिध्यति । अत्र सर्वे प्राकृतपरिणामाः कालकृताः । तत्र तु भगवदिच्छयैवाप्राकृतपदार्थपरिणामा भवन्तीति विशेषः । उक्तं च 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' ( वि० पु० ) इति । 'भूते'ति । अतीतानागतवर्तमानभेदेन कालस्त्रिविधः । भेदश्चायमुपाधिकृतः । प्रकृतशब्दप्रयोगाधिकरणकालो वर्तमानः । प्रकृतशब्दप्रागभावाधिकरणकालोऽतीतः । प्रकृतशब्दध्वंसाधिकरणकालोऽनागत इति । केचिद्भूतभविष्यत्कालातिरिक्तं वर्तमानं नेच्छन्ति । तन्न साधु । वर्तमानैकगोचरस्य प्रत्यक्षस्य वर्तमानस्याभावेऽसम्भवात् । वर्तमानादिकालभेदावेदकलकारभेदोपदेशाच्च त्रैकाल्य-

हेतुः । निमेषकाष्ठा (तत्परा विनाडी) कलाघटिका मुहूर्त दिवस पक्ष मास ऋत्वयन संवत्सरादिव्यवहारहेतुश्च । मनुष्यमानेन मास पितृणा दिनम् । तेषाममावास्या मध्याह्न. । मनुष्यमानेन संवत्सरो देवाना दिनम् । तेषामुत्तरायणमहः । दक्षिणायनं रात्रि । एव देवमानेन द्वादशवर्षसहस्रसंख्याक चतुर्युगमित्युच्यते । तत्र चतुस्सहस्रवर्षसंख्याक कृतयुगम् । तत्र पूर्णो धर्म. । त्रिसहस्रवर्षसंख्याकम् त्रिपाद्धर्मवत्त्रेतायुगम् । द्विसहस्रवर्षपरिमित (सार्धपादधर्म, द्विपाद्धर्मवद्द्वापरम् । सहस्रवर्षसंख्याकमेकपाद्धर्मयुत कलियुगम् । एतेषा सन्धि द्विसहस्रसंख्याक । एवम्भूतचतुर्युगसहस्राणि ब्रह्मणो दिवसप्रमाणम् । एव रात्रि ।

---

सिद्ध. । घटोऽस्तीति प्रत्यक्षस्य वर्तमानकालनिर्देश्च । वर्तमानाद्यधिक भूतभविष्यत्त्वयो वर्तमानस्या भावेऽनिरूप्यत्वाच्च । निमेषेति अक्षिपक्ष्मनिमेष क्रियावच्छिन्न कालो निमेषकाल । 'निमेषक्षणगणनाधिक्येन च काष्ठादि कालविभागो विष्णुपुराणादौ ओक्त । यथा- 'निमेषोमानुषो योऽसौ मात्रा मात्राप्रमाणत । तै पञ्चदशभि काष्ठा त्रिंशत् काष्ठा. कला स्मृता ॥ नाडिका तु प्रमाणेन सा कला दश पञ्च च । नाडिकाभ्यामथद्वाभ्या मुहूर्तो द्विज सत्तम ॥ अहोरात्र मुहूर्तास्तु त्रिंशत्, मासो दिनैस्तथा । मासैर्द्वादशभिर्वर्षमहोरात्र तु तद्दिवि ॥' इति । क्षणादिभेद कालस्यावच्छेदकभेदात् । क्रियामात्र जन्यमात्र वा कालोपाधि , इत्येकः पक्षः ।'सर्वे निमेषा जज्ञिरे' 'कलामुहूर्तादिमयश्च काल.' इत्यादिप्रमाणबलात् कालस्य क्षणादिपरिणामोऽस्तीति चापर पक्ष. ।

'तत्र पूर्णो धर्म' इति । कृतयुगे धर्मश्चतुष्पादित्यर्थ । चत्वारो धर्मस्यपादास्तपोध्यान यज्ञदानानि . तेषु युगक्रमेण त्रेतादौ ह्रासो वर्णितोन्यायकुसुमाञ्जलावुदयनाचार्यैं । भागवते तु प्रकारान्तरेण वर्णनमस्ति । यथा—तप. शौच दया सत्यमिति पादा. कृते कृताः । अधर्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव । इदानी धर्म पादस्ते सत्य निर्वर्तयेत । त जिघृक्षत्यधर्मोऽयमनृतैर्नेधितः कलिः ॥' (स्क० १, अ० १७) इति धर्मपरीक्षित्सम्वादे । 'एव नित्ये'ति । नित्यप्रलयो जनाना जन्तूना

ब्रह्मणोऽह्नि चतुर्दश मनव । तथेन्द्रास्सप्तषयश्च । एकैकमनोरेकसप्ततिचतुर्युगपरिमाणकाल: । एवं ब्रह्ममानेन ब्रह्मणश्शतवर्षजोवित्वम् । एतत्सर्वं कालाधीनम् । एवं नित्य-नैमित्तिकप्राकृतादिप्रलया अपि कालाधीना । कालस्य स्व-कार्यं प्रति स्वस्योपादानत्वम् । अखण्डकालो नित्य: । खण्ड-काला पुनरनित्या: । एवम्भूत: काल ईश्वरस्यक्रीडापरिकरो भवति । लोलाविभूतावोश्वर कालाधीन एव कार्य करोति । नित्यविभूतौ तु कालस्य विद्यमानत्वेऽपि तस्य न स्वात-न्त्र्यम् । केचित्काल एव नास्तीति वदन्ति । अन्ये तु तामसो महान् काल इति । उभयेषामागमबाध: प्रत्यक्षबाधश्च । षडिन्द्रियवेद्य: काल इत्याचार्या । तेनानुमेयवादिनिरास । इति कालो निरूपित ॥

इति श्री वाधूलकुलतिलक श्रीमन्महाचार्यस्य प्रथमदासेन श्रीनिवासदासेन विरचिताया यतीन्द्रमतदोपिकाया शारीरकपरिभाषाया कालनिरूपण नाम पञ्चमोऽवतार ॥



मरणरूप । नैमित्तक चतुर्मुखस्य दिनावसाने जायमान. त्रिलोकी-नाश । प्राकृत: द्विपरार्ध ब्रह्मायुरवसाने जायमान: प्राकृताना सर्वेषा प्रकृतौ लय: । महाप्रलयानन्तरसृष्टिस्तुभगवत्कर्तृका । भगवदुपासना-सिद्धाना प्रारब्धफलानुभवान्तरभावी प्रकृतिबन्धविनिर्मोक्ष आत्य-न्तिकप्रलय इत्यूचु । प्रलया अपीत्यपिना नित्य नैमित्तिकप्राकृतसृष्टि-स्थितिप्रवृत्तयो ग्राह्या । स्वकार्यं—क्षणलवादिकम् । खण्डकाला: क्षणादय: । खण्ड कालस्य क्षणस्यापि विभुत्वमङ्गीकृत न्यायसिद्धा-ञ्जनादौ—यथा, 'एकेनैवक्षणेनास्य विश्वस्यापि विशेषणात् । कालवत्तत् क्षणानाञ्चव्यापित्वमवमीयते ॥ इति । '**कालाधीन**' इति । स्वसङ्कल्पा-नुसारितत्तत्कालागमप्रतीक्षक एवेत्यर्थ. । **न स्वातन्त्र्यम्**—न नित्यवि-भूतिगतपदार्थपरिणामनप्रागल्भ्यम् । 'न कालस्तत्रवै प्रभु'रिति वच-नात् । **केचिदित्यादि** । केचित् कालतत्वमेव नास्तीत्याहु: । केचिद्भग-

## ॥ अथ षष्ठोऽवतारः ॥

अथ नित्यविभूतिर्निरूप्यते । शुद्धसत्त्वधर्मभूतज्ञान-जीवेश्वरसाधारण लक्षणमजडत्वम् । अजडत्व नाम स्वयं-प्रकाशत्वम् । तत्र शुद्धसत्त्वधर्मभूतज्ञानसाधारणलक्षणम् पराक्त्वे सति अजडत्वम् । तत्तु स्वयम्प्रकाशत्वे सति परस्मा एव भासमानत्वम् । शुद्धसत्त्व नाम त्रिगुणद्रव्यव्यतिरिक्तत्वे सति सत्त्ववत्त्वम् । निःशेषाविद्यानिवृत्तिदेशविजातीयान्यत्व वा । सा विभूति ऊर्ध्वप्रदेशेनानन्ता । अधःप्रदेशेन परि-

---

त्रानेव काल इति । केचित्तत्त्वेष्वैव काल इति । तन्न युक्तम् । प्रकृति-पुरुषवत् कालस्यापि तत्त्वान्तरत्वस्य भगवद्विभूतित्वस्य च 'रूपान्तर तद्द्विज कालसंज्ञम्' 'ब्रह्मा दक्षादय काल. × × × जनार्दनविभूतय' ( वि० पु० ) इति स्पष्ट प्रतिपादितत्वात् । सृष्ट्यादिकालेऽपि वर्त-मानस्य कालस्य 'सदेव सोम्येदमग्र आसीत्' इति श्रुतस्य तामसमहत्त्व चानुपपन्नमेवेतिबोध्यम् । 'षडिन्द्रिये'ति । शब्दादि सुखादि षडिन्द्रिय-ग्राह्यगुणविशेषणतया इदानीमिति कालस्यापि प्रत्यक्षेण गृह्यमाणत्वा-दित्यर्थ । 'तेन'—प्रत्यक्षसिद्धत्वसमर्थनेन । कालोपाधिभिरेवान्यथा सिद्धेर्नानुमानेन कालसिद्धिसम्भवः, तस्मात् प्रत्यक्षत. शास्त्रतश्चैव कालसिद्धिरितिमत साधीयः ॥

॥ इति पञ्चमावतार व्याख्या ॥

## ॥ अथ षष्ठावतार व्याख्या ॥

'स्वयप्रकाशत्वम्' ज्ञानान्तरानपेक्षप्रकाशवत्त्वम् । स्वनिरूपित-विषयत्वस्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वमिति फलितम् । 'पराक्त्व' इति । धर्मभूतज्ञान शुद्धसत्त्व च प्रकाशेते स्वाश्रयचेतनाय. ईश्वरादिभ्यश्च स्वयमेव । 'स्वसत्ताभासक सत्त्व गुणसत्त्वाद्विलक्षणम्' (पाञ्चरात्रे) इति स्वयँप्रकाशत्व नित्यविभूतेरुक्तम् । शुद्ध सत्त्व यस्येति नित्यविभूतिद्रव्य शुद्धसत्त्व मुच्यते । अस्य लक्षणमाह 'त्रिगुणे'ति । ईश्वरादावतिव्याप्तिवारणाय विशेष्यदलम् । प्रकृतावतिव्याप्तिवारणाय सत्यन्तम् । 'तमस. परस्तात्' 'रजस. पराके' ( प्रकृतिमण्डलात्परदेशे-वर्तमानम् इत्यर्थ. । ) इति रजस्तमोराहित्य 'विशुद्धसत्त्व तवधाम

च्छिन्ना। अचेतना स्वयम्प्रकाशा च। आनन्दावहत्वादानन्दनात्मिका। पञ्चोपनिषन्मन्त्रप्रतिपाद्यतया पञ्चोपनिषदात्मिका। अप्राकृतपञ्चशक्तिमत्तया (मयतया) पञ्चशक्तिमयीति निगद्यते।

सा विभूतिरीश्वरस्य नित्याना मुक्ताना चेश्वरसकल्पात् भोग्यभोगोपकरणभोगस्थानरूपा च भवति। भोग्यानीश्वरशरीरादीनि। भोगोपकरणानि चन्दनकुसुमवस्त्रभूषणायुधादीनि। भोगस्थानानि तु गोपुरप्राकारमण्डपविमानोद्यानपद्मिन्यादीनि। तत्रेश्वरस्य नित्यमुक्ताना च शरीराणि भगवन्नित्येच्छासिद्धानि। मुक्तानां शरीराणि तेषां पित्रादिसृष्टि युगपदनेकशरीरपरिग्रह इत्यादीनि भगवत्सकल्पादेव

---

णान्तम्' ( भागवते ) इत शुद्धसत्त्व चास्य सिद्धम्। लक्षणान्तरमाह 'निश्शेषे'ति। निश्शेषाविद्यानिवृत्तिः विरजातीरेऽमानवकरस्पर्शात् श्रीमन्महामणिमण्डपे भगवदुपसत्तेर्वा भवति नित्यविभूत्येकदेश एवेति तत्प्रदेशान्तरेष्वव्याप्तिवारणाय 'निश्शेषाविद्यानिवृत्तिदेश इत्यनुक्त्वा तद्विजातीयान्यत्वपर्यन्तानुधावन कृतम्। तादृश देशविजातीयम् प्रकृत्यादि। तद्भिन्नत्व नित्यविभूतौसर्वत्रास्तीति लक्षण समन्वयः। 'से'ति। नित्यविभूतिरूर्ध्व तिर्यक्चापरिच्छिन्ना। अधस्तु प्रकृतिमण्डलेन परिच्छिन्ना। तम परत्वश्रुते। 'परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेपु' इति हि श्रूयते। ( पृष्ठेषु-उपरितनेषु )। **अचेतना**—ज्ञातृत्वरहिता। 'आनन्दे'ति। 'ज्ञानानन्दमया लोका' ( भगवच्छास्त्रे ) इति नित्यविभूतिस्थलोकाना ज्ञानानन्दत्व स्मृतम्। तदनुकूलतया स्वयप्रकाशत्वमिति बोध्यम्। 'पञ्चे'ति। उपनिषन्मन्त्रा.—रहस्यनामानि। 'परमेष्ठीपुमान् विश्वो निवृत्तिः सर्व एव हि' इत्युक्तरहस्यनामकाप्राकृतपञ्चभूतात्मिकेत्यर्थ.। अप्राकृतपञ्चभूतानि पञ्चशक्तय इति व्यवह्रियन्ते भगवच्छास्त्रे। तद्गुणाश्चाप्राकृता. दिव्याः शब्दादय. पञ्च। **मुक्तानामि**ति। केवलभगवत्सङ्कल्पात्, क्वचित् क्वचित् भगवत्सङ्कल्पानुविधायिस्वसङ्कल्पाच्च मुक्ताना शरीरादीनि भवन्ति। स एकधा भवति×× त्रिधाभवति' 'स यदि पितृलोककामः' ( छा० ) इत्यादिप्रमाणबलात्।

भवन्ति । भगवतो व्यूहविभवार्चावतारशरीराण्यप्राकृतानि ।
अर्चावतारेषु प्रतिष्ठानन्तरं प्रसादोन्मुखभगवत्संकल्पाधीनमप्राकृतशरीरमत्राविर्भवति । प्राकृताप्राकृतसंसर्गः कथमिति न शङ्कनीयम् । श्रीरामकृष्णाद्यवतारशरीरवदिति प्रमाणानुसारेण परिहारो द्रष्टव्यः ।

मुक्तानां (शरीरपरिग्रहादिस्तु) शरीरादिपरिग्रहस्तु वसन्तोत्सवे वेषपरिग्रहादिवत् स्वामिनो मुखविकासहेतुत्वात्कैङ्कर्यमेव । ईश्वरशरीरस्य षाड्गुण्यप्रकाशकत्वात् षाड्गुण्यमिति व्यवहारः । नित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनमार्दवार्जवादयो दिव्यमङ्गलविग्रहगुणाः । तस्य व्यापकत्वं गीतासु प्रसिद्धम् । मुक्तस्य शरीरं नास्तीति वचनं तु कर्मकृतशरीराभावपरम् । तत्रेन्द्रियादीनां नित्यत्वादत एव कार्यकारणभावाभावात् प्राकृतवन्न तत्त्वान्तरव्यपदेशः । एतेन तत्र शरीरादिकं नास्तीति मतनिरासः । *तमसः परस्तादित्युक्त्या प्रकृत्येकदेशवादनिरासः । अप्राकृतशब्दस्पर्शरूपरसगन्धाश्रयत्वादाकाशव्यावृत्तिः । ज्ञानात्मकत्वप्रतिपादनात् जडमिति मतनिरासः ।

---

अर्चारूपाणामप्राकृतत्वं कथमित्यत्राह 'अर्चावतारेषु' इति । प्रतिष्ठाविधिना प्रसन्नो भगवान् स्वसङ्कल्पादेव स्वाप्राकृतरूपेण प्रतिष्ठितमूर्तौ सन्निधत्ते । ता च स्वीयदिव्यरूपत्वेनाभिमन्यते । अतो दिव्यत्वं तेषामितिभावः । अतएव 'तामेव ब्रह्मरूपिणीम्' ( वि० ध० ) इत्युक्तम् । 'सर्वातिशायिषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः । मन्त्रे वाच्यात्मना बिम्बे कारुण्यात् समुपस्थितम्' (पाञ्चरात्र) इति वचनमत्रानुसन्धेयम् ।

'तस्ये'ति । भगवद्रूपस्यातिमहत्त्वम्—व्यापकत्वं विश्वरूपादौ प्रसिद्धम् । 'द्यावापृथिव्योरिदमन्तरालं व्याप्तं त्वयैकेन दिशश्च सर्वाः' इति गीता । मुक्तस्य शरीरं नास्तीतिवचनम् 'अशरीरवावसन्त'मि-

भगवतोऽप्राकृतदिव्यमङ्गलविग्रहस्यास्त्रभूषणाध्या-योक्तं स (र्वतत्त्वो) वपाश्रयत्वम् । तद्यथा । पुरुषस्य कौस्तुभाकारत्वम् । प्रकृतेः श्रीवत्सरूपत्वम् । महतो गदारूपत्वम् । सात्त्विकाहङ्कारस्य शङ्खरूपत्वम् । तामसाहङ्कारस्य शार्ङ्ग-रूपत्वम् । ज्ञानस्यासिरूपत्वम् । अज्ञानस्य तदावारकरूपत्वम् । मनसश्चक्रत्वम् । ज्ञानेन्द्रियकर्मेन्द्रियाणा शररूपत्वम् । सूक्ष्म-स्थूलभूनाना वनमालाकारत्वम् । अत्र

* चेतश्चक्रति चेतनासिरमतिस्तत्सवृत्तिर्मालिका
भूतानि स्वगुणैरहङ्कृतियुगं शखेन शार्ङ्गयते ।
बाणाः खानि दशापि कौस्तुभमणिर्जीवः प्रधानं पुनः
श्रीवत्स कमलापते तव गदामाहुर्महान्त बुधाः ॥

इति संगृह्योक्त पद्यमनुसंधेयम् । सा विभूतिरामोदप्रमोद-समोदवैकुण्ठाख्यरूपेण चतुर्विधा । पुनरनन्ता । त्रिपाद्विभूति-परमपदपरमव्योमपरमाकाशामृतनाकाप्राकृतलोकानन्दलोक-

---

त्यादि । 'न तत्त्वान्तरव्यपदेश.' किं तु पञ्चशक्तिमयमित्येव । **प्रकृत्येक-देशवाद** —प्रकृतेरेकदेश एव नित्योद्रिक्तसत्त्वकः नित्यानुद्भूतरजस्त-मस्को विशुद्धसत्त्वशब्दित इति यादव प्रकाशादीना वाद । **'अप्राकृते'**ति। 'सर्वगन्ध. सर्वरस' ( छा० ) इत्यादिप्रमाणबलतः । अस्त्रभूषणाध्यायो विष्णुपुराणे प्रथमेऽशे । **'पुरुषस्य कौस्तुभाकारत्व'**मिति । पुरुषतत्त्वा-भिमानी कौस्तुभमणिर्भगवत उरसिलसतीत्यर्थ । एवमग्रेऽपि बोध्यम् । 'समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्य रूपमन्य-द्धरेर्महत् ॥' ( वि० पु० ) इति च भगवद्दिव्यमङ्गलविग्रहस्य शक्ति-शब्दित प्रकृतिपुरुषाद्याश्रयत्वमुक्तम् । पूर्वाचार्याणा सग्रहश्लोकमत्र विषये समुद्धरति **'चेत'** इति । चक्रति-चक्रवदाचरति । मनश्चक्ररूपेण वर्तते भगवतीत्यर्थ । चेतना—ज्ञानम् । अमति —अज्ञानम्, तत्सवृति – असिकोशः । मालिका—स्वगुणैः शब्दादितन्मात्रैः सहितानि भूतानि वनमाला । शार्ङ्गयते—शार्ङ्गवदाचरति । तामसाहङ्काराभिमानि भगवत श्रीशार्ङ्ग धनुरित्य : । खानि—इन्द्रियाणि । महान्त—महत्त-

वैकुण्ठायोध्यादिशब्दवाच्या च । तस्या विभूतौ द्वादशावरणोपेतमनेकगोपुरप्राकारैरावृतं वैकुण्ठं नाम नगरम् । तत्रानन्दनामको दिव्यालयः । तदन्तः रत्नमयानेकस्तम्भसहस्रैर्विरचिता महामणिमण्डपाख्या सभा । तस्यां सहस्रफणामणितेजोविराजितोऽनन्तः । तस्मिन् धर्मादिमयदिव्यसिंहासनम् । तदुपरि चामरहस्ताभिः विमलादिभिः सेव्यमानमष्टदलात्मकं पद्मम् । तदुपरि प्रकृष्टविज्ञानधामा शेषः । तदुपरि वाचः परं महदद्भुतम् । एवं नित्यविभूतिस्संग्रहेण निरूपिता ।

इति श्रीवाधूलकुलतिलकश्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शारीरकपरिभाषायां नित्यविभूतिनिरूपणं नाम षष्ठोऽवतारः ॥



---

त्वम् । शिष्टं स्पष्टम् । अयं श्लोकः श्रीमद्वेदान्ताचार्यकुमाराणां श्रीवरदार्याणाम् । 'से'ति । आमोदप्रमोदसम्मोदाख्यानि सङ्कर्षणप्रद्युम्नानिरुद्धानां दिव्यभवनानि । पुनरनन्ता-असंख्यानभोग्यभोगोपकरणभोगस्थानसमृद्धा । एतद्विभूतिसमृद्धेर्लीलाविभूतिसमृद्धिर्नास्त्रिगुणिततत्त्वश्रुतं 'पादोऽस्यविश्वाभूतानि, त्रिपादस्यामृतं दिवि' ( पु० सू० ) इति । श्रीमति वैकुण्ठे परात्परस्य भगवतो वासुदेवस्यावस्थानं वर्णयति 'तस्या'मिति । वाचः परमद्भुतम्—परमपुरुषस्वरूपम् सर्वदाऽनुभवेऽप्यपूर्ववदाश्चर्यावहमिदमित्थमित्यनिर्देश्यमपरिच्छिन्नमाहात्म्यं नित्यमुक्तैरनुभाव्यं सेव्यं च विराजत इत्यर्थः । अत्र '**कूर्मादीन्**' '**सव्यपादम्**' इति श्लोकद्वयमनुसन्धेयम् । तद्यथा—कूर्मादीन् दिव्यलोकान् तदनुमणिमयं मण्डपं तत्र शेषम्, तस्मिन् धर्मादिपीठं तदुपरि कमलं चामरग्राहिणीश्च । विष्णुं देवीर्विभूषायुधगणमुरगपादुके वैनतेयम् सेनेशं द्वारपालान् कुमुदमुखगणान् विष्णुभक्तान् प्रपद्ये ॥ सव्यं पादं प्रसार्यश्रितदुरितहरं दक्षिणं कुञ्चयित्वा जानुन्यादाय सव्येतरमितरभुजं नागभोगे निधाय । पश्चाद्बाहुद्वयेन प्रतिभटशमनेधारयन् शङ्खचक्रे देवीभूषादिजुष्टो जनयतु जगतां शर्म वैकुण्ठनाथः ॥ (नित्यग्रन्थे) इति ॥

**॥ इति षष्ठावतारव्याख्या ॥**

## ।। अथ सप्तमोऽवतारः ।।

अथ क्रमप्राप्तं धर्मभूतज्ञानं निरूप्यते । स्वयंप्रकाशत्वे सत्यचेतनद्रव्यत्वे सति सविषयत्वम् ( स्वयंप्रकाशाचेतनद्रव्यत्वेसति विषयित्वम् ) विभुत्वे सति प्रभावद्द्रव्यगुणात्मकत्वम्, अर्थप्रकाशो बुद्धिरित्यादि तल्लक्षणम् । तद्धर्मभूतज्ञानम् ईश्वरस्य नित्यानां च सर्वदा नित्यमेव विभु च । बद्धानां तिरोहितम् । मुक्तानां पूर्वं तिरोहितमनन्तरमाविर्भूतम् । ननु ज्ञानस्य नित्यत्वे ज्ञानमुत्पन्नम्, ज्ञानं नष्टमिति व्यवहारः कथमिति चेत्, तदुच्यते । ज्ञानस्य संकोचविकासावस्थामादाय तत्सभवात् । दृतेः पादाद्यथोदकं क्षरति । तथा ज्ञानमपीन्द्रियद्वारा निस्सृत्यार्थेन सन्निकृष्यते । अहिकुण्डलवत्संकोचविकासौ ।

---

## ।। अथ सप्तमावतार व्याख्या ।।

धर्मभूतज्ञानस्य लक्षणमाह 'स्वयंप्रकाशत्व' इति । स्वयम्प्रकाशत्वं जीवेश्वरयोरप्यस्ति । तत्रातिव्याप्तिबारणाय अचेतनद्रव्यत्वे सतीत्युक्तम् । एवमप्यतिव्याप्तिर्नित्यविभूताविति सविषयत्वमित्युक्तम् । सविषयत्व नाम स्वभिन्नविषयकत्वम् । यद्वा सविषयत्वपदेन नित्यविभूतिभिन्नत्व विवक्षितम् । विषयप्रकाशकत्व तु तृतीयलक्षण वक्ष्यते । द्वितीय लक्षणमाह विभुत्वेसतीत्यादि । विभुत्व नाम सर्वद्रव्यसयोगार्हत्वमत्रविवक्षितम् । तेन बद्धज्ञाने नाव्याप्ति । प्रभावदिति दृष्टान्तमात्रम् न तु लक्षणे प्रविष्टम् । प्रभायामतिव्याप्तिवारणाय सत्यन्तम् । द्रव्यगुणस्वरूपत्व द्रव्यगुणात्मकत्वम् । गुणत्व चात्र नियमेनान्याश्रितत्वम् । नत्वद्रव्यत्वम् । नियतपरमात्माश्रितद्रव्यत्वात् कालस्य तत्रातिव्याप्तिः प्रसज्यते । तद्वारणाय कालभिन्नत्वे सतीति विशेषण देयम् । ईश्वरेऽतिव्याप्तिवारणाय द्रव्यगुणात्मकत्वमिति विशेष्यदलम् । लघुभूत धर्मभूतज्ञानस्य लक्षणमाह 'अर्थप्रकाश' इति । अर्थप्रकाशकत्व ज्ञानस्यलक्षणम् । 'त'दिति । नित्य सर्वदाविभु इत्यन्वय । तिरोहितं कर्मणा सकुचितम् । बन्धनिवृत्त्यनन्तरमाविर्भूतम्—असकुचित सर्वविषयावगाहि विभु । 'सचानन्त्याय कल्पते' इति मुक्तौ जीवात्मनो निजधर्मभूतज्ञानत

सर्वं ज्ञानं स्वत एव प्रमाणम् । स्वयंप्रकाशा च विप्रतिपन्ना संवित् स्वगतव्यवहारं प्रति स्वाधीनकिञ्चित्कारा । स्वसजातीयसंबन्धानपेक्षव्यवहारहेतुत्वात् । अर्थेन्द्रियदीपादिवत् । न च चक्षुरालोकयोस्सजातीयत्व, आहङ्कारिकतैजसयोर्भेदात्(इभेदः) । अनेन ज्ञानस्य क्षणिकत्वम्, त्रिक्षणावस्थायित्वम्, प्रातिभासिकवद्व्यावहारिकस्यापि मिथ्यात्वम्, परतः प्रामाण्यम्, ज्ञानस्याधानस्त्यमित्यादिपक्षा निरस्ताः । स्तम्भ स्तम्भ इत्यादिधारावाहिकज्ञानं त्वेकमेव ।

ननु, आगमबलात् ज्ञानस्य नित्यत्वाङ्गीकारे कथं जागरसुषुप्त्यादिभेदसिद्धिरिति चेन्न । यथा दाहकस्य वह्नेः

---

आनन्त्यश्रवणात् । इति चर्मभस्त्रिका । पाद. छिद्रम् । 'नश्ये'ति । बन्धावस्थाया ज्ञान सकुचितमिन्द्रियद्वारा निःसृत्यविषयेण संसृज्य तस्य प्रकाशक भवति । तद्विषयप्रकाशकप्रसरण विशिष्टस्योत्पत्तिविनाशयोगात् ज्ञान नष्टम्, उत्पन्नमिति व्यवहार. सङ्गच्छते इत्यर्थ । अद्वैतिभिरन्त. करणस्यैवेन्द्रियद्वारा विषयदेश गतस्य विषयाकारवृत्तिरङ्गीकृता । सैव चिदाभासवती वृत्तिज्ञानमुच्यते । सांख्यैरपि तस्यैव ज्ञानाख्य परिणाम स्वीकृत । विशिष्टाद्वैतमतेतु ज्ञानस्यैव मन इन्द्रियद्वारा प्रसरणेन विषयसनिकर्ष इष्यते । 'प्रज्ञा च तस्मात् प्रसृता पुराणी' 'मत्त. स्मृतिर्ज्ञानमपोहन च' ( अपोहन—विस्मृति., ज्ञानसङ्कोचः ) 'इन्द्रियाणा हि सर्वेषा यद्येक क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृते· पादादिवोदकम् ॥' इत्यादिप्रमाणबलात् । तत्तत्सन्निकृष्ट ज्ञान तत्तज्ज्ञानमुच्यते । सनिकर्षस्य कादाचित्कत्वादेव घटज्ञान जात, नष्टमित्यादिव्यवहार इति भाव । 'अही'ति । कुण्डलभावः सर्पभावश्च यथाऽहेः सत एव सङ्कोचविकासलक्षणौ, एव सतएव ज्ञानस्य सङ्कोचविकासावस्थे भवत इत्यर्थ । **'स्वतः प्रामाण्य'**मिति । यथावस्थितवस्तुग्रहणस्वाभाव्यात् ज्ञानाना स्वतः प्रामाण्यम् । क्वचिद्दोषबलादप्रामाण्यमिति भाव । ज्ञान ज्ञानान्तरेणैव ग्रह्यते । न स्वत इति तार्किकादीना मतम् । तत्प्रतिक्षेपाय स्वयप्रकाशत्व साधयति **'विप्रतिपन्ने'**ति । स्वयम्प्रकाशा

दाह्यसन्निधौ मण्यादिप्रतिबन्धकाद्दाहाभाव. तद्वत् ज्ञानति-
रोधायकतमोविशेषसन्निधानासंनिधानाभ्या स्वापादिसिद्धिः ।
पुंस्त्वादिवच्च । पुंस्त्वादिकं तु बाल्ये तिरोहितं यौवने आवि-
र्भवति । यो यदाश्रितस्वभाव', स तस्य गुण इति गुणलक्ष-
णलक्षितत्वाद्ज्ञान गुणः; विशेषणादिवत् । यतस्सकोचवि-
कासावस्थावत् अतो द्रव्यमपि भवति । आत्मगुणभूतस्य
ज्ञानस्य द्रव्यत्व कथमिति न शङ्कनीयम् । प्रभावदेकस्यैव
द्रव्यत्वगुणत्वयोर्विरोधाभावात् । अवस्थाश्रयो द्रव्यमिति
हि द्रव्यलक्षणम् । स्वाश्रयादन्यत्र वर्तमानत्वमपि प्रभावदुप-
पद्यते । प्रयोगश्च, गुणभूता बुद्धि' द्रव्यम्, प्रसरणादिमत्त्वात् ।
प्रभावत् । ज्ञानं द्रव्यम्, सयोगादृष्टान्यत्वे सति भावनाकारण-
त्वात्, आत्मवदिति । मुक्तज्ञानस्य युगपदनन्तदेशसंयोगो
नयनसूर्यादितेजोवत् सभवति । ज्ञानम्, मति. प्रज्ञा सवित्-
धिषणा धीः मनोषा शेमुषी मेधा बुद्धिरित्येवमादयश्शब्दाः

---

वास्वयप्रकाशेति विवादविषयीभूता सवित्—स्वगतव्यवहार—स्वविष-
यकव्यवहारप्रति स्वाधीनकिञ्चित्कारा—स्वाधीनप्रकाशा । स्वसजाती-
यान्तरानपेक्षस्वव्यवहारहेतुत्वात् इति शब्दार्थ । व्यवहारंप्रति किञ्चि-
त्कारोनाम व्यवहारहेतु. प्रकाशः । अयभावः—न हि घटज्ञानं स्वव्यव-
हारे घटज्ञानान्तरमपेक्षते । यथा घटादिरर्थः, इन्द्रियं, दीपो वा स्वव्य-
वहारे स्वात्यन्तसजातीय घटान्तरादिकनापेक्षते । अपेक्षतेतु आत्मादि
विजातीयम् । न च चक्षुस्तैजस तजस आलोकोऽपेक्षत इति वाच्यम् '
चक्षुष आहङ्कारिकत्वात् आलोकस्य च तैजसत्वात् साजात्याभावा-
त्तयोः । एव ज्ञानं न स्वव्यवहारे ज्ञानान्तरापेक्षमिति स्वयप्रकाश भव-
तीति । अत्राय प्रयोगो बोध्य —ज्ञान स्वसजातीयान्तरानपेक्षप्रकाश-
वत् प्रकाशमानत्वात् यद्यत्प्रकाशमान तत्तत्स्वसजातीयान्तरानपेक्षप्र-
काशवत्, यथा घटदीपालोकादि । इति । स्वसाजात्य स्वनिष्ठासाधा-
रणधर्मवत्त्वेन बोध्यम् । अयमर्थ आत्मसिद्धौ परमाचार्यैरुपपादितः—
'न हि कश्चित् पदार्थ स्वप्रकाशायासाधारणसजातीयार्थान्तरापेक्षो

ज्ञानपर्यायाः। बुद्धिरेवोपाधिभेदात्सुखदुः खेच्छाद्वेषप्रयत्न- रूपा। सुखादे(स्वजनकतया)र्जनकतयाऽभ्युपगतज्ञानातिरेके प्रमाणाभावात्। इच्छामि द्वेष्मीति व्यवहारस्य स्मरामी- त्यादिवद्ज्ञानविशेषेणोपपत्तेः।

ननु *कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृति- रधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेत्युक्तम्, ज्ञानरूपत्वं कथमिति चेन्न; ज्ञानस्य मनस्सहकारित्वनियमात् मन एवेत्युपचारादु- क्तमिति न विरोधः। एवं प्रत्यक्षानुमानागमस्मृतिसंशय- निर्णयविपर्ययभ्रमविवेकव्यवसायमोहरागद्वेषमदमात्सर्यधैर्य -

---

दृष्ट' इत्यादिना। अत्र ज्ञानं प्रकाशत इति स्वव्यवहारे स्वसजातीया- न्तरानपेक्षं स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वात्। योऽर्थान्तरे स्वस- म्बन्धाद्यद्व्यवहारहेतुः स स्वस्मिन्तद्व्यवहारे न स्वसजातीयान्तरा- पेक्षः। यथा सत्ता। सा हि घटादावस्तीति व्यवहारहेतु 'सत्ता सती'ति स्वव्यवहारे न सत्तान्तरापेक्षा। इत्यपि ज्ञानस्य स्वयप्रकाशत्वसाधनं श्रीभाष्यादौ निरूपित मनुसन्धेयम्। स्वयप्रकाशत्वं ज्ञानस्य वर्तमान- दशायां स्वाश्रयं प्रत्येवेति बोध्यम्। **आहङ्कारिकतैजसयोर्भेदात्**—आह- ङ्कारिकत्वतैजसत्वाभ्यां विजातीयत्वात्। 'भेदः' इति पदमधिकं प्रती- यते। **'अनेने'**ति। ज्ञानस्य नित्यत्वस्वयप्रकाशत्वात्मधर्मत्वसमर्थनेने- त्यर्थः। क्षणिकत्वं ज्ञानानां बौद्धमते। द्वित्रिक्षणावस्थायित्वं तार्किक- मते। तैरपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वोपगमात्। व्यावहारिकस्यापि मिथ्यात्वं योगाचाराणामद्वैतिना च मते। ज्ञानस्यैवात्मत्वमिति च सौगतादीनाम् पक्षः। **'धारावाहिके'**ति। यावद्विषयान्तरसञ्चारमेक- विषयालम्बिज्ञानं स्थिरमिति प्रज्ञापरित्राणे वरदनारायण भट्टारकैरुक्त 'स्तम्भस्स्तम्भस्स्तम्भ इति धीर्धारावाहिकीमता। धारावाहिक विज्ञा- नमेकं ज्ञानमतं हि न॥' इति॥

**'ननु'** इति। 'जानात्येवायं पुरुषः' 'न हि विज्ञातुर्विज्ञातेर्विपरि- लोपो विद्यते' 'अवबोधादयो गुणाः। प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते' इत्यादिशास्त्रवचनतो ज्ञानस्यात्मधर्मस्य नित्यत्व- स्वीकारे स्वापादिव्यवस्था न स्यात्। ज्ञानाभावस्यैव स्वापत्वात्,

चापल्यदम्भलोभक्रोधदर्पस्तम्भद्रोहाभिनिवेशनिर्वेदानन्दादयः: सुमतिर्दुर्मति. प्रीतिस्तुष्टिः पुष्टिरुन्नतिः श्रान्तिः कीर्तिः विरक्तीरतिर्मैत्री दयामुमुक्षालज्जातितिक्षा विचारणा विजिगीषा मुदिता क्षमा चिकीर्षा जुगुप्सा भावना कुहनाऽसूयाजिघांसा तृष्णा दुराशा वासना दुर्वासना चर्चा भक्तिः प्रपत्तिरित्येवमादयश्च जीवात्मगुणा अनन्ताः धर्मभूतज्ञानावस्थाविशेषा एव । एव, ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यचातुर्यस्थैर्यधैर्य - शौर्यपराक्रमादयो भगवतोऽनन्तकल्याणगुणाः ज्ञानशक्त्योर्विततिभूता ।

---

ज्ञाननित्यत्वे स्वापस्यैवा सिद्धिप्रसङ्गादिति शङ्कितुराशयः। प्रसक्तामाशङ्का परिहरति 'ने'ति । उद्बुद्धतमोगुणेन ज्ञानस्य तिरोहितत्वान्निरुद्धप्रसरणशक्तिकत्वा दतिसकुचितत्वेन स्वापे न विषयप्रकाशकत्वमस्ति । विषयज्ञानाभाव एव स्वाप । विषयप्रकाशनसमय एव धर्मभूत ज्ञानमवभासते । नान्दथा । अतः स्वापोपपत्ति. । तमोगुणप्रयुक्ताभिभवाभावे च प्रसरण शक्ते रनिरोधादिन्द्रियद्वारा प्रसृत्य विषयप्रकाशन ज्ञानेन सम्भवति जागरादौ । अतः स्वापजागरव्यवस्थोपपद्यत इत्यर्थः। 'पुँस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति ब्रह्ममीमासासूत्रेऽयमर्थउक्तः । यदाश्रितस्वभाव.—नियमेन पराधीनस्थितिक' । '**विशेषणादिव**'दिति । यथा दण्डकुण्डलादिविशेषण विशेष्य पुरुषादिक प्रति गुण इत्युच्यते । यथावा दध्यादि होम प्रति गुण उच्यते,तथेत्यर्थः । आत्माश्रितस्वभावत्वे ज्ञानस्यात्मनोऽन्यत्र वृत्ति कथमित्यत्राह '**स्वाश्रया**'दिति । स्वाश्रयमपरित्यज्यैव विकासशक्त्याबहि. प्रसरण प्रभाया इव ज्ञानस्य सम्भवतीत्यर्थः । 'आश्रयादन्यतो वृत्तेराश्रयेण समन्वयात् । द्रव्यत्व च गुणत्व च ज्ञानस्यैवोपपद्यते।'इति ह्यु क्त श्रीमद्यामुनमुनिभि.। समन्वयात्—अविनाभावेन सम्बद्धत्वात् । ज्ञानस्य द्रव्यत्वमनुमानेन साधयति '**प्रयोगश्चे**'ति । भवतीति शेष. । प्रयोगान्तर'**ज्ञानद्रव्यं**'मिति । अद्रव्ये आत्ममनः सयोगेऽदृष्टे च भावन्तरव्यसस्कारहेतुत्वमस्तीति व्यभिचारवारणाय सयोगादृष्टान्यत्वे सतीति । रूपादौ व्यभिचारवार-

तत्र ज्ञानं नाम सर्वसाक्षात्काररूपम् । शक्ति अघटितघटनासामर्थ्यम् । बल धारणसामर्थ्यम् । ऐश्वर्य नियमनसामर्थ्यम् । वीर्यमविकारित्वम् । तेज पराभिभवनसामर्थ्यम् । महतो मन्दैस्सह नीरन्ध्रेण सश्लेपस्सौशील्यम् । वात्सल्यं दोषेऽपि गुणत्वबुद्धि. । दोपादर्शित्व वा । आश्रितविरहासहत्वं मार्दवम् । मनोवाक्कायैकरूपत्वमार्जवम् । स्वसत्तानपेक्षतद्रक्षापरत्वं सौहार्दम् । अभिजनवृत्तगुणाद्यनपेक्षया सर्वाश्रयणीयत्व साम्यम् । स्वार्थनिपेक्ष(स्वप्रयोजनमनपेक्ष्य) परदु खनिराचिकीर्षा कारुण्यम् । परदु खासहिष्णुत्व (परदु.खदु.खित्व) वा । क्षीरवदुपायभावेपि स्वादुत्व माधुर्यम् । भक्तानुग्रहवदान्यत्वादेरामूलतो दुरवगाहत्वं गाम्भीर्यम् । अपरिमित (प्रभूतं) दत्वाप्यतृप्तत्वमौदार्यम् । आश्रितदोषगोपनं चातुर्यम् । अकम्पनीयत्व स्थैर्यम् । अभग्नप्रतिज्ञत्व धैर्यम् । परबलप्रवेशसामर्थ्यं शौर्यम् । तन्निराकरण पराक्रमः । इत्याद्यूह्यम् ।

---

णाय विशेष्यम् । ज्ञानपर्यायाः—ज्ञानशब्दपर्याया । ज्ञानरूपैकार्थवाचिन इति यावत् । 'सुखादे'रिति । सुखजनकमनुकूलविषयज्ञानमेवानुकूलत्वेन भासमान सुखम् । प्रतिकूलत्वेन भासमान ज्ञानमेव प्रतिकूलविषय दु.खम् । इच्छाद्वेषयोरपि ज्ञानावस्थाविशेषरूपत्वमेव । अपेक्षात्मक ज्ञानम् इच्छा । अनिष्टात्मकज्ञानमेव द्वेष. । कार्याध्यवसाय लक्षण प्रयत्नः इति बोध्य ज्ञानविशेषत्व यथायोग्यम् । 'इच्छामी'ति । यथा स्मरामीति ज्ञानविशेषावलम्बी व्यवहार. । तथैवेच्छामीत्यादिष्वपि । एतेन जानामि, इच्छामोति प्रतीतिव्यवहारभेदादिच्छादेर्ज्ञानभिन्नत्वमिति शङ्का निरस्ता ।

इच्छादयो ज्ञानावस्थाविशेषलक्षणाउक्ताः । तदनुपपन्नम् । कापिलादिभिरन्त. करणधर्मा, कामादय इत्युक्तत्वात् । श्रुतिरपि 'काम सङ्कल्पः××× मन एवेति इच्छादीना मनोधर्मत्वमेवाहेतिशङ्कायामाह 'ज्ञानस्य' इति । मन. सहकारि यस्य, तत्त्वात् । नियमेन

ज्ञानविशेषभूतयोः भक्तिप्रपत्त्यो. स्वरूपं किञ्चिदुच्यते । भक्तिप्रपत्तिभ्यां प्रसन्न (भक्तिप्रपत्ती व्याजीकृत्य) ईश्वर एव मोक्ष ददाति । अतस्तयोर्मोक्षोपायत्वम् । ( भक्त्यपृथक्सिद्धाना) मोक्षोपायत्वेनोक्तानां कर्मयोगज्ञानयोगप्रभृतीना भक्तिद्वारैव साधनत्वम् । (तत्तत्पुरुषबिवक्षयोपायत्वम्) कर्मयोगो नाम, उपदेशाज्जीवपरयाथार्थ्यज्ञानवता शक्त्यनुसारेण फलसंगरहितानिषिद्धकाम्यनित्यनैमितिकरूपपरिगृहीतकर्मविशेष । स तु देवार्चनातपस्तीर्थयात्रादानयज्ञादिभेदभिन्नः । अयं तु जीवगतकल्मषापनयनद्वारा ज्ञानयोगमुत्पाद्य तद्द्वारा (वा साक्षाद्वा) भक्त्युत्पादको भवति । ज्ञानयोगो नाम, कर्मयोगान्निर्मलान्त करणस्येश्वरशेषत्वेन प्रकृतिवियुक्तस्वात्मचिन्ताविशेष । तस्य साक्षाद्भक्त्युपयोगः । एवं साधनान्तराणामपि (स्वातन्त्र्यम्) भक्त्युपयोगित्व (च) यथाप्रमाणमूह्यम् ।

---

काम दिज्ञानवृत्तौ मनस. सहकारिकारणत्वात् कार्यकारणयोरभेदोपचारः श्रुतौ । यथा तत्रैव प्रकरणे सर्वेषा शब्दाना वागेवेति वागुच्चार्यत्वादभेदोपचार कृत, तद्वदित्यर्थ. । 'एव'मिति । अनुमानागमशब्दौ तज्जन्यज्ञानपरौ । विपर्ययभ्रमौ—अन्यथाज्ञानविपरीतज्ञाने । मोह.—अज्ञानम् । मद.—गर्व, आत्मनि महत्त्वाभिमानप्रयुक्तो बुद्धिविकार । स्तम्भः—किङ्कर्तव्यताऽपरिस्फूर्तिः । द्रोहः परानिष्टसङ्कल्पनम् । निर्वेद. पश्चात्तापलक्षणमनुशोचनम् । अनन्द.—अनुकूलप्रकाशात्मक ज्ञानम् । चर्चा—विचारात्मक ज्ञानम् । एवमन्यदपि विभाव्यम् । 'ज्ञानशक्त्यो'रिति । केचन गुणाः ज्ञानविततिरूपाः । केचन—शक्तिविस्तारलक्षणा. इत्यर्थः ।

ईश्वरगुणाना ज्ञानादीना स्वरूपविशेषमाह 'तत्र' इति । नीरन्ध्रेण—निरन्तरतया । स्वमहत्त्वाननुसन्धानेन मन्दैरेकरसतया सश्लेषण सौशील्यम् । वात्सल्य स्नेहविशेष. । तत्कार्यं दोषेऽपि गुणत्वबुद्धिः, दोषादर्शनं वा यथासम्प्रदायम् । **तद्रक्षापरत्वम्**—आश्रितरक्षातत्पर-

भक्तियोगो नाम, यमनियमासनप्राणायामप्रत्याहार-धारणाध्यानसमाधिरूपाष्टांगयुक्त. तैलधारावदविच्छिन्नस्मृति-सन्तानरूप । स च विवेकविमोकाभ्यासक्रियाकल्याणानव सादानुद्धर्षरूपसाधनसप्तकजन्यः । तत्र विवेको नाम, जात्या-श्रयनिमित्तादुष्टादन्नात्कायशुद्धिः । विमोकः कामानभिष्वङ्ग. । अभ्यासः पुनः पुनरालम्बनसंशीलनम् । शक्तित पञ्चमहा-यज्ञाद्यनुष्ठानं क्रिया । सत्यार्जवदयादानाहिंसादीनि कल्या-णानि । अनवसाद, दैन्याभावः । अनुद्धर्ष तुष्ट्यभाव । अतिसंतोषश्च विरोधीत्यर्थ । एव साधनसप्तकानुगृहीता भक्तिः दर्शनसमानाकारा अन्तिमप्रत्ययावधिका च भवति । स चान्तिमप्रत्यय एतच्छरीरावसाने शरीरान्तरावसाने वा भवति । वेदनध्यानोपासनादिशब्दवाच्या च भक्तिः परभक्ति-

---

त्वम् । 'अप्यहं जीवित जह्या त्वां वा सीते सलक्ष्मणम् । न तु प्रतिज्ञा संश्रुत्य ब्राह्मणेभ्यो विशेषतः' ( रामा० ) इति हि भगवद्वचनम् । पर-दु खासहिष्णुत्वं परदुःखदुःखित्वपर्यवसन्नम् । 'व्यसनेषु मनुष्याणा भृश भवतिदु.खितः' इति स्मरणात् । एतत्प्रयुक्ता च परदुःखनिराचिकीर्षा भगवतोऽस्त्येवेति बोध्यम् । यथासम्प्रदाय मन्तव्यम् । तन्निराकरणम्, परबलनिरसनम् । शिष्ट स्पष्टार्थम् ।

'ज्ञानविशेषभूतयो'रिति । अविच्छिन्न स्मृति सन्तानरूपस्य भग-वद्ध्यानस्य स्नेहपूर्वकत्वाद्भक्ति शब्दितस्य, प्रार्थनागर्भ भगवदेकोपाय-त्वाध्यवसायलक्षणप्रपत्तेश्च ज्ञानविशेषरूपत्वमस्त्येवेति ज्ञेयम् । 'कर्म-योगज्ञानयोगप्रभृतीना भक्तिद्वारैव साधनत्वम्', इति वाक्यस्यानन्तर 'तत्तत्पुरुषविवक्षयोपायत्वम्' इति पाठः क्वचित् पुस्तके दृश्यते । तस्यायमर्थ. 'ज्ञानभक्त्यन्वितकर्म जनकादिषु दृश्यते । कर्मभक्त्यन्वित ज्ञान भरतादिषु दृश्यते । कर्मज्ञानान्विता भक्तिः प्रह्लादप्रमुखाश्रया ॥' इति स्मृतिवचने जनकादितत्तत्पुरुषनिष्ठनिष्ठाविशेषविवक्षया कर्मयो-गादेरपि साक्षान्मोक्षोपायत्वमुक्तम् । इति । फलसङ्गरहितेति । कर्म-फलस्वर्गादीच्छारहित नित्यनैमित्तिकोपस्कृतदेवार्चनादिरूप इत्यर्थ. ।

परज्ञानपरमभक्तिरूपक्रमवती प्रपत्त्यङ्गिका च। सा द्विविधा। साधनभक्तिफलभक्तिभेदात्। उक्तसाधनजन्या साधनभक्तिः। फलभक्तिस्तु, ईश्वरकृपाजन्या श्रीपराङ्कुशनाथादिनिष्ठा। *मद्भक्तजनवात्सल्यमित्यादिषु स्तुतिनमस्कारादिषु च भक्तिशब्दप्रयोग औपचारिक।

ननु वेदान्तेषु श्रवणमननयोरपि विधानात्कथं ध्यानमेव विधीयत इति चेत्; उच्यते। अधीतसाङ्गवेद पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वादनुवाद.। श्रवणप्रतिष्ठार्थत्वान्मननस्याप्यनुवादः। तस्मात् ध्यानमेव विधीयत इति न

---

साक्षाद्वा इत्यस्यानन्तरमात्मसाक्षात्कार मुत्पाद्येति योज्यम्। भक्त्युत्पादकत्वम्--परभक्त्युत्पादकत्वम्। 'मद्भक्ति लभते पराम्' इति वचनात्। साधनान्तराणा--नामसङ्कीर्तनादीनाम्। एतेषा साक्षादपि मोक्षसाधनत्व श्रूयते। एव ज्ञानभक्त्यनुगृहीतकर्मणो, कर्मभक्त्यन्वित ज्ञानस्यापि पुराणादौ। यथाप्रमाण मन्तव्यम्। कर्मयोगादीना स्वरूप गीतार्थसग्रहे सगृहीत परमाचार्यै 'कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम्, ज्ञानयोगो जितस्वान्तै परिशुद्धात्मनिस्थिति.। भक्तियोगः परैकान्तप्रीत्याध्यानादिषु स्थितिः॥' इति।

**स्मृतिसन्ताने**ति। तत्तद्विद्योक्तगुणादिविशिष्ट भगवत्स्मृतिसन्ततिरूप इत्यर्थः। 'विवेके'ति। विवेकादेः साधनसप्तकस्य भगवद्ध्यानहेतुत्व वाक्यकारेणोक्तम्। विवृत च श्रीभाष्ये लघुसिद्धान्ते। जातिदुष्ट कलञ्जादि। आश्रयदुष्ट पतिताद्यन्नम्। निमित्तदुष्ट केशकीटाद्युपहतम्। त्रिविधदोपरहितशुद्धान्नसेवया स्वदेहस्य विविक्तत्वापादन विवेकः। कामानभिष्वङ्गः—काम्येषु विषयेषु अतिसङ्गराहित्यम्। आलम्बन शुभाश्रयभूत भगवद्दिव्यमङ्गलविग्रहादि। विरोधी-भक्तेर्विरोधी। अनुगृहीता—परिनिष्पादिता। दर्शनसमानाकारा—भावनाप्रकर्षाद्विशदावभासरूपा। '**स चे**'ति। यत्र विद्यानिष्पन्नातच्छरीरावसानकाल एव-प्रारब्धनिश्शेषक्षये सति, प्रारब्धशेषे तु तदारब्धान्तिमदेहावसानेऽन्ति-

विरोधः । ध्यानशब्दवाच्या भक्तिः विद्याभेदाद्बहुविधा भवति । नाश्च विद्या द्विविधाः, ऐहिकफला मुक्तिफला-श्चेति । तत्रैहिकफला उद्गीथविद्यादयः । मुक्तिफलास्तु, अन्तरिक्षविद्यान्तरादित्यविद्या दहरविद्या भूमविद्या सद्विद्याम-धुविद्योपकोसलविद्याशाण्डिल्यविद्या पुरुषविद्या प्रतर्दनविद्या वैश्वानरविद्या पञ्चाग्निविद्या,इत्यादिका ब्रह्मविद्याः । न्यास-विद्या प्रपत्तिः । सा च *अनन्यसाध्ये स्वाभीष्टे महाविश्वास-पूर्वकम् । तदेकोपायतायाच्ञा प्रपत्तिश्शरणागतिरित्युक्ता *आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्य-तीति विश्वासो गोप्तृत्ववरण तथा । आत्मनिक्षेपकार्पण्य-मित्यङ्गपञ्चकयुक्ता एतद्देहावसाने मोक्षप्रदा । अन्तिमप्रत्यय-

---

मप्रत्ययो भवतीत्यर्थः । 'वेदने'ति । ज्ञानसामान्यवाचिनो वेदनशब्दस्य मोक्षकारणबोधकस्य मोक्षकारणवाचिसमानप्रकरणस्थ ध्यानोपासना-दिविशेषशब्दवाच्यज्ञानविशेषे पर्यवसान सामान्यविशेषन्यायेन । तद-भिप्रेत्याह वेदनध्यानोपासनादिशब्दवाच्येति । वर्णित च पूर्वाचार्यै 'वेदन ध्यानविश्रान्त ध्यान श्रान्त ध्रुवस्मृतौ । सा च दृष्टित्वमभ्यति दृष्टिर्भक्तित्वमृच्छति ॥' इति । भक्तिः—'स्नेहपूर्वमनुध्यान भक्तिरित्यभि-धीयते' 'सा परानुरक्तिरीश्वरे' इत्युक्तलक्षणा । परभक्तिपरज्ञानपरम-भक्तयः भक्तिपर्वविशेषा. । उत्कटदिदृक्षागर्भप्रेमपूर्वकस्मृतिसन्ततिः परा भक्ति. । पूर्णसाक्षात्कारावस्थापन्ना सा परज्ञानम् । उत्कट प्रेप्सागर्भा सैव परमभक्तिरिति । अव्यवधानेन परप्राप्तिसाधन परमभक्तिरेव । 'मद्भक्ति लभते पराम् । भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मा तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥' ( गीता ) इत्यत्र पर्वभेदास्त्रयोऽपि कीर्तिता इति विभाव्यम् । उक्तसाधनेति । पुरुषप्रयत्नसाध्या कर्मज्ञानविवेक शमादिसाधनानुष्ठानजन्या साधन-भक्ति मोक्षोपायत्वेन क्रियमाणा व्यासादिनिष्ठा । भगवत्प्रसादैनैव जन्या स्वयप्रयोजनरूपा साध्यभक्तिः श्रीपराङ्कुशनाथमुन्यादिनिष्ठा । साध्यभक्तिनिष्ठाना तु भगवत्येवोपायत्वाध्यवसाय उपायत्वप्रार्थनागर्भ इति सम्प्रदायविद. प्राहुः । मद्भक्ते'ति । मद्भक्तजनवात्सल्य पूजाया

निरपेक्षा सकृत्कर्तव्या न्यासश्शरणागतिरित्यादिशब्दवाच्या ज्ञानविशेषरूपा । एषा गुरुमुखाद्रहस्यादिशास्त्रेषु सत्सप्रदाय-पूर्वक ज्ञातव्येतीह बालबोधनार्थप्रवृत्तेग्रन्थे न प्रकाश्येति विरम्यते ।

भक्तिप्रपत्त्योरेव मोक्षसाधनत्वेन स्वीकारात् परो-क्तोपायनिबासः । यथा वेदबाह्यानां मध्ये केषांचिन्मते देहातिरिक्तात्मनोऽनङ्गीकारान् मोक्षप्रवृतिरेव न सभवति । अन्येषां मते ज्ञानस्य क्षणिकत्वातस्यैवात्मत्वात्कस्य प्रवृति । सतानस्येति चेन्न, अन्य प्रत्यन्येन हि यत्नो न कार्य इति न प्रवृत्तिः । अपरेषां मते (धर्माधर्मा) सत्त्वासत्त्वादि सप्त-भङ्गीरीत्यानेकान्तवादान्न प्रवृत्ति । वैशेषिकादिपक्षे पाषाण-कल्पमोक्षे प्रवृत्तिः कस्यापि न सभवति । साख्यादिपक्षेष्वी-श्वरानङ्गीकारात् पुरुषस्य वा प्रकृतेर्वा मोक्ष इति सशयान्न

---

चानुमोदनम् । स्वयमभ्यर्चन चैव मदर्थ दम्भवर्जनम् । मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया । ममानुस्मरण नित्य यश्च्मा नोपजीवति । भक्तिरष्टविधा ह्येषा' (भगवच्छास्त्रे) इति निरुक्ताष्टविधभक्तिषु 'श्रव-णकीतनविष्णो स्मरणपादसेवनम् । अर्चन वन्दन दास्य सख्यमात्म-निवेदनम् ॥' इत्युक्तेषु नवविधेषु च प्रकारेषु प्रीत्या क्रियमाणत्वोपा-धिना भक्तिशब्दः प्रयुज्यते । एतेऽपि श्रवणादयः परभक्तेर्निष्पादका-मताः, तत्स्वरूपान्तर्गताश्च । मुख्या भक्तिस्तु मोक्षप्रापिका परमभक्ति-रित्याशय. ।

वेदान्तेषु 'श्रोतव्यो मन्तव्य' इति श्रवणमननयोरपि विधानात् कथ ध्यानमेव विधीयत इत्युच्यते इति शङ्का परिहरति **'उच्यते'** इत्यादिना । **'प्रयोजनवदिति** । वेदे' इत्यादि ।,**अनुवाद**' इति । विधि-प्रत्ययस्तु रागप्राप्तस्यैव वैधत्वे झटितिप्रवृत्तिसम्पादकत्वात्सार्थक इति द्रष्टव्यम् । 'ध्यानमेवे'ति । 'निदिध्यासितव्यो द्रष्टव्य' इति दर्शनसमाना-कारत्वविशिष्ट ध्यानविधिरिति हार्द्दम् । **'ताश्च विद्याः'** इति । वेदान्त-विहिता उपासना इत्यर्थ । **'तत्रे'**ति । कर्माङ्गोद्गीथोपासनाद्याः कर्म-

प्रवृत्तिः । मायिमते व्यावहारिकवाक्यस्य पारमार्थिकाभेदज्ञानाजनकत्वान्न प्रवृत्तिः । भास्करयादवोक्तकर्मज्ञानसमुच्चयवादोप्युक्तन्यायेन निरस्त । शैवमते तु पशुपते प्राप्यत्वस्वीकाराद्वेदविरुद्धभस्मधारणादेः साधनत्वेन स्वीकाराच्च तन्निरास । एव मतिर्निरूपिता ॥

इति श्रीवाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शारीरकपरिभाषायां बुद्धि (धर्मभूतज्ञान) निरूपण नाम सप्तमोऽवतार ॥



---

समृद्धिप्रभृत्यर्वाचीनफलसाधनीभूता काम्यविद्याः । सद्विद्यादयस्तु परब्रह्मोपासनारूपाः मोक्षफला परविद्याशब्दिताः ॥ परविद्यास्वेव विद्याशब्दो मुख्य. । 'सा विद्या या विमुक्तये' इति स्मरणादिति बोध्यम् । पञ्चाग्निविद्या च प्रकृतिवियुक्त परब्रह्मात्मकस्वात्मचिन्तनरूपा कैवल्यमोक्षसाधिका बोध्या । एतद्विद्यानिष्ठाना कश्चित् काल स्वात्मानुभव कृत्वा तदनन्तर परब्रह्मानुभवो भवितेति एक पक्ष. । प्रकृति वियुक्तब्रह्मात्मकस्वात्मानुभव एवैतेषा मुख्योद्देश्य इति च पर पक्ष. । **गोप्तृत्वरणम्**—उपायत्वप्रार्थनम् । **आत्मनिक्षेपः**—स्वरक्षाभरसमर्पणम् । यद्वा आत्मात्मीययोस्तच्छेषतया समर्पणम् । प्रपत्तिर्मोक्षोपायः इत्येकः पक्ष । प्रपत्ति. सिद्धोपायाधिकारिविशेषणम् । प्रपन्नाना कृते शरण्य एव मोक्षोपाय इति च पर. पक्षः । साम्प्रदायिकार्थत्वान्नात्रप्रपञ्च्यते ।

**'परोक्तोपायनिरास'** इति । वाक्यजन्यवाक्यार्थज्ञानमात्रम् व्यक्ताव्यक्तज्ञ विज्ञानम्, ज्ञानकर्मसमुच्चय इति मायावादिसाङ्ख्ययादवप्रकाशाना मोक्षोपायो मत. । ज्ञानकर्माङ्गक भगवद्भक्तेर्मोक्षोपायत्वसमर्थनेन तन्निरास. फलित. । केषाञ्चित्—चार्वाकाणाम् । अन्येषा—बौद्धानाम् । अपरेषाम्—आर्हतानाम् । स्यान्मुक्तोऽस्ति, स्यान्मुक्तोनास्तीत्यनैकान्त्यवाद सम्भवात्तन्मते मोक्षार्थ निष्कम्पप्रवृत्तिर्न घटते । प्रवृत्तिः रुचिपूर्विका पाषाणकल्पमोक्षार्था च न घटते । साङ्ख्यमते पुरुषस्य नित्यमुक्तत्वात् प्रकृतेर्नित्यविकारित्वाच्चकस्य मोक्षो वा मोक्षार्था

## ॥ अथाष्टमोऽवतारः ॥

अथ जीवो निरूप्यते । प्रत्यक्त्वचेतनत्वात्मत्वकर्तृत्वादीनि ईश्वरजीवसाधारणलक्षणानि । प्रत्यक्त्व नाम स्वस्मै स्वयमेव भासमानत्वम् । चेतनत्व नाम ज्ञानाश्रयत्वम् । आत्मत्वं शरीरप्रतिसबन्धित्वम् । कर्तृत्वं सकल्पज्ञानाश्रयत्वम् । एव सामान्यलक्षणलक्षितस्य जीवस्य विशेषलक्षणान्युच्यन्ते । अणुत्वे सति चेतनत्वम्, स्वत. शेषत्वे सति चेतनत्वम् । एवमाधेयत्व विधेयत्व पराधीनकर्तृत्व परतन्त्रत्वादिकमूह्यम् ॥ स च देहेन्द्रियमन.प्राणधीभ्यो विलक्षणः । यथा मम शरीरमिति प्रतीत्या देहाव्द्यावृत्त । एवं चक्षुषा पश्यामि श्रोत्रेन्द्रियेण शृणोमि वाचा वदामीत्यादिप्रत्ययात् बाह्येन्द्रियेभ्यो व्यावृत्तः । मनसा जानामीति मनसो ज्ञानकरणत्वप्रतीतेः मम प्राणा इति व्यतिरेकोक्त्या जानाम्यहमिति प्रतीत्या च मनःप्राणज्ञानेभ्यो व्यावृत्तः ।

---

प्रवृत्तिरिति सशय एव । ज्ञानमात्रस्य मोक्षहेतुत्व श्रुतेः ज्ञानकर्मणो समप्राधान्येन समुच्चय इति पक्षो निरस्त. । मतान्तराणां दुस्स्थत्वान् श्रीहरिध्यानमेव मोक्षहेतुरिति त्रय्यन्ततत्त्वविदां सिद्धान्त एव समादरणीय इति ग्रन्थकृदाशयः ॥

॥ इति सप्तमावतार व्याख्या ॥

## ॥ अथ अष्टमावतार व्याख्या ॥

'**प्रत्यक्त्व**'मिति । स्वकर्तृकव्यवहारप्रयोजक स्वनिरूपितविषयतावत्त्व प्रत्यक्त्वमिति निष्कर्षः । '**सङ्कल्पे**'ति । इदमहकरिष्य इति । जीवात्मना लक्षणमाह परमात्मव्यावृत्तम् '**अणुत्वे सती**'ति । ईश्वरेऽनिव्याप्तिवारणाय सत्यन्तम् । पृथिव्याद्यतिसूक्ष्मांशेऽतिव्याप्तिवारणाय विशेष्यम् । लक्षणान्तर '**स्वतः शेषत्वे**' इति । स्वभावत एव—निरुनाधिकतया भगवन्त प्रति शेषत्वेसतीत्यर्थ. । प्रकृत्यादावतिव्याप्तिवारणाय विशेष्यदलम् । भगवतो भक्तशेषत्व तु भक्त्युपाधिकम्, ( ऐच्छि-

स चाणुपरिमाणः। उत्क्रान्त्यादिश्रवणात्प्रमाणानु-
साराच्च। अणुत्वे युगपदनेकविषयानुभव क्रमिनि न शङ्क-
नीयम्। धर्मभूतज्ञानव्याप्त्योपपत्ते.। एनेनैव सौभरिप्रभृ-
तीना मुक्तानां च युगपदनेकशरीरपरिग्रहोऽपि सभवति।

स च नित्य। पूर्वानुभूनार्थप्रतिसंधानात्। नित्य-
श्चेज्जीव उत्पन्नो जीवो नष्ट इति प्रतीति. कथमिति चेन्न,
जीवस्य देहसबन्ध उत्पत्तिः। तद्वियोगो नाश इति प्रतिपा-
दनात्। जीवस्वरूपं नित्यमेव। स च प्रतिशरीर भिन्न.।
एकपरिमाणेषु सर्वेषु घटेष्वेको घट इति प्रतीतिवत् व्रीहि-
राशौ चैको व्रीहिरिति प्रतीतिवच्च ज्ञानैकाकारतया एकत्व-
व्यवहारः न तु स्वरूपैक्यम्। प्रमाणविरोधात्। स्वतस्सुखी
उपाधिवशात्ससारः। अयं च कर्ता भोक्ता शरीरी शरीर च

---

कम्) न स्वत'। 'एव'मिति। परमात्माधेयचेतनत्वम्, परमात्मविधेय-
चेतनत्वम्, परमात्मायत्तकर्तृत्व, परमात्मपरतन्त्रचेतनत्व च जीवल-
क्षणानीत्यर्थ.। **व्यतिरेकोक्त्या**—आत्मसम्बन्धित्वलक्षणभेदोक्त्या।
'देहेन्द्रियमनःप्राणधीभ्योऽन्य' इत्यात्मसिद्धिवचनमत्रानुसन्धेयम्। देहा-
दितोभेदश्चात्मनस्तत्र, सयुक्तिनिरूपितः। श्रीमल्लोकाचार्यस्वामिपादैश्च
तत्वत्रये चित्प्रकरणेऽनुगृहीतम् 'आत्मस्वरूप कथ देहादिविलक्षणमिति
चेत्, देहादीना मम देहादिकमित्यात्मनः पृथगुपलभ्यमानत्वात्, इद-
मित्युपलभ्यमानत्वात्, आत्मनोऽहमित्युपलम्भात्, अस्य कदाचिदुप-
लम्भात् आत्मनः सर्वदोपलम्भात्, एतेषामनेकत्वात्, आत्मन एकत्वात्,
आत्मा एतेभ्यो विलक्षणः स्वीकार्यः। एव युक्तीना बाधसम्भावनाया-
मपि शास्त्रबलेनात्मा देहादिविलक्षणः सिध्यति' इति। एतद्भाष्ये च
श्रीमद्वरवरमुनिभिः सम्यङ्निरूपितोऽयमर्थ.। श्रीमद्वेदान्ताचार्यचरणै-
रपि तत्त्वमुक्ताकलापे 'स्याद्धामो त्वमंहष्टे रयमहमिति धीर्देह एवात्म-
जुष्टे निष्टप्ते लोहपिण्डे हुतवहमनिवद्धेदकाख्यानिमूला। श्रुत्यर्थापत्ति-
भिश्च श्रुतिभिरपि च न. सर्वदोपोज्झिनाभिर्देहा देहान्तरगत्तिक्षम इह
विदितः सम्विदानन्दरूपः॥' (जीवसरे) इति देहातिरिक्तात्मसिद्धि-
रुपवर्णिताऽनुसन्धेया।

**भवति । प्रकृत्यपेक्षया शरीरी । ईश्वरापेक्षया शरीरं च । अस्य प्रत्यक्षश्रुतिभ्यां स्वयंप्रकाशत्वं च सिद्धम् । प्रयोगश्च,** आत्मा स्वयंप्रकाश ज्ञानत्वात् । धर्मभूतज्ञानवदिति । ज्ञानत्वाणुत्वामलत्वादय एतस्य स्वरूपनिरूपकधर्माः । एतेन ज्ञानस्य (क्षणिकत्वात्) क्षणिकसन्तानरूप आत्मेति बौद्धपक्ष , भूतचतुष्टयात्मकत्वाद्देहस्य देहावधिक आत्मेति चार्वाकपक्ष , गजदेहे गजपरिमाण पिपीलिकादेहे पिपीलिकापरिमाण , अतो देहपरिमाण आत्मेति जैनपक्षः, कर्तृत्व भोक्तृत्वादिक प्रकृतेरेव नतु पुरुषस्येति साङ्ख्यपक्षः, ब्रह्मांशो जीव इति यादवपक्ष', सोपाधिकब्रह्मखण्डो जीव इति भास्करपक्षः, अविद्यापरिकल्पितैक जीववादपक्ष', अन्त करणावच्छिन्नानेकजीववादपक्ष , इत्येवमादयो विरुद्धपक्षा निरस्ताः । विभुत्ववादपक्षोऽपि ।

---

**सचाणपरिमाण** इति । उत्क्रान्तिगत्यागतीनामिति ( ब्रह्ममीमांसा ) सूत्रे शरीरादुत्क्रमणस्वर्गलोकगमन पुनरागमनादीना जीवात्मनि श्रुत्या प्रतिपादितत्वाद्विभुत्वे तेषामनुपपत्तेर्मध्यमपरिमाणत्वेचा नित्यत्वप्रसङ्गादणुर्जीव इति स्थापितम् । **'प्रमाणानुसाराच्चे'**ति । 'एषोऽणुरात्मा' 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीव.' 'आराग्रमात्रो ह्यवरोऽपि दृष्ट. 'स्वरूपमणुमात्रं स्यात् ज्ञानानन्दैक लक्षणम्' 'त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिता.' इत्यादि श्रुतिस्मृतितः जीवात्मनामणुत्वसिद्धिरिति भावः । 'अणुत्वे' इति । अणोर्जीवस्य देहैकदेशस्थस्य पादे मे वेदना शिरसि मे सुखमिति युगपदनेकावय वा वच्छिन्नसुखदु.खानुभवो धर्मभूतज्ञानव्याप्त्येत्यर्थः । एतेनैव धमभूतज्ञानव्याप्त्यैव ।

प्रतिसन्धानात्—य पुराऽद्राक्ष तमेवेदानी पश्यामि, स्पृशामीत्यनुसन्धानात् । अनेन द्रष्टुरात्मनश्च स्थिरत्व सिद्धम् । 'न जायते म्रियते वा' 'नित्यो नित्याना चेतनश्चेतनानामेको बहूनाम्' इत्युत्पत्तिविनाशयोर्निषेधान्नित्यत्वश्रुतेश्चात्मना नित्यत्वसिद्धिरिति भाव. । जीवात्म-

ननु जीवस्य विभुत्वानङ्गीकारेऽदृष्टजनितदेशान्तर-फलोपलब्धि. कथमिति चेन्न, जीवस्य सम्बन्धाभावेऽपि अदृ-ष्टवशादुपपद्यते (दुपपत्तेः)। अदृष्ट नाम, भगवत्प्रीतिजनक-जीवकर्तृककर्मविशेषजन्यो ज्ञानविशेष । स विशेषो भगव-त्सकल्प एव विभुस्वरूपं भगवन्तमाश्रितः। अत फलोप लब्धिरिति न विरोधः।

---

नामैक्यवादो 'देवतियङ् मनुष्येषु पुमानेको व्यवस्थित.' इत्यादौ एका-कारवत्त्वनिबन्धन इत्याह 'एके'ति। प्रमाणविरोधात्—नित्यात्मबहुत्व प्रतिपादक श्रुत्यादिविरोधात्। उपाधिवशात् कर्मवशात्। प्रकृत्यपेक्षया-प्रकृतिपरिणामदेहाद्यपेक्षया। 'अस्ये'ति। अहमिति स्वापादौ स्वयमेवा-त्मा ऽपरोक्षतया भासते स्वस्मै।'अत्राय पुरुष स्वय ज्योतिर्भवति इत्या-दिश्रुतिश्च स्वयम्प्रकाशत्वे जीवात्मन. प्रमाणमित्यर्थ.। ज्ञानत्वादिति। आत्मपक्षक स्वयप्रकाशत्वसाधकानुमाने ज्ञानत्व हेतुरुक्त। अत्रज्ञानत्व-पदेन स्वयम्प्रकाशत्वोक्तौ हेतोः साध्याविशेष प्रसज्यते। विषयप्रकाश-कत्वोक्तौ पक्षे हेतोरभावात्स्वरूपासिद्धिः। अत ज्ञानत्व पदेनानुपचा-रेण ज्ञानपदेन वेदान्तशास्त्रेनिर्दिष्टत्व विवक्षितम्। ज्ञानपदेनमुख्यवृत्त्या निर्देश आत्मनो धर्मभूतज्ञानस्य च वर्तते। ज्ञानस्य स्वयप्रकाशत्व पूर्वा-वतारे साधितम्। तद्दृष्टान्ती कृत्यात्मन स्वय प्रकाशत्वमत्र ज्ञानत्व-हेतुना साध्यते। स्वय प्रकाशत्व च स्वविषयकज्ञानान्तरनिरपेक्ष स्वप्र-काशत्व विवक्षितम्। वर्णित च श्रीमद्वेदान्ताचार्यचरणैः तत्त्वमुक्ताक-लापे 'किञ्च वेदान्तदृष्ट्या ज्ञानत्वादेष धीवत् स्वविषयधिषणानिर्व्यपे-क्षस्वसिद्धि.' ( जीवसरे—षष्ठश्लोक )। अत आत्मनो ज्ञानत्वेन स्वय-प्रकाशत्व साधनं साध्वेवेति भाव। 'ज्ञानत्वे'ति। आदिपदेनानन्दत्वस्य ग्रहणम्। 'ज्ञानानन्द मयस्त्वात्मा शेषो हि परमात्मन ( पाञ्चरात्र ) इति वचनात्। दुःखाज्ञानमलास्तु प्रकृतिसम्बन्धौपाधिका एवेति च तत्रैव वर्णितम्। देहावधिकः—देहकालावधिकः। देह एवात्मेति भाव। एकानेकजीववादः प्राचीननवीनाद्वैति पक्षः। विभुत्वपक्ष साख्याना तार्किकाणा च। एतेन—आत्मना नित्यत्वबहुत्वाणुत्वस्थापनेनैतेषा पक्षाणा निरासः सिध्यतीति भाव.।

'ननु जीवस्ये'ति। एकत्र स्थितस्य जीवस्यादृष्टाद्देशान्तरे भोग्या-देरुत्पत्तिरस्ति। तददृष्टसम्बन्धश्च स्वाश्रयजीवसंयोगलक्षणः तदुपादान-

स जीवस्त्रिविधः। वद्धमुक्तनित्यभेदात्। तत्र बद्धा नाम, अनुवृत्तससाराश्चतुर्दशभुवनाण्डकटाहवर्तिनो ब्रह्मादि-कीटपर्यन्ताश्चेतनविशेषाः। श्रीमतो नारायणस्य नाभिकम-लादुत्पन्नो ब्रह्मा। ब्रह्मणो रुद्रः, पुनर्ब्रह्मणो सनकादियोगिनो नारदादिदेवर्षयो वसिष्ठादिब्रह्मर्षय पुलस्त्यमरीचिदक्षकश्य-पादिनवप्रजापतयश्च बभूवुः। तेभ्यो देवा दिक्पालकाश्चतुर्द-शेन्द्राश्चतुर्दशमनवोऽसुराः पितरस्सिद्धगन्धर्वकिन्नरकिम्पुरुष-विद्याधरादयो वसवो रुद्रा आदित्या अश्विनौ दानवयक्षरा-क्षसपिशाचगुह्यकादयश्च । एव देवयोनयो बहुविधाः। मनु-ष्या अपि ब्राह्मणक्षत्रियवैश्यशूद्रादिजातिभेदाद्बहुविधा.। तिर्यञ्चोपि पशुमृगपक्षिसरीसृपपतङ्गकीटादिभेदाद्बहुविधा। स्थावरा अपि वृक्षगुल्मलतावीरुत्तृणादिभेदाद्बहुविधाः। वृक्षा-दीना जलाहरणाद्युपयुक्तकिञ्चिज्ज्ञानसंबन्धोऽस्त्येव। *अप्रा-णवत्सु स्वल्पा सेत्युक्तत्वात्। अतो देवमनुष्यतिर्यक्स्थावर-भेदभिन्ना बद्धाः। एते पुनर्जरायुजाण्डजोद्भिज्जस्वेदजाश्च भवन्ति। देवमनुष्या जरायुजाः। तेषु ब्रह्मरुद्रादयस्सनकाद-यश्च सीताद्रौपदीधृष्टद्युम्नप्रभृतयो भूतवेतालादयश्चायो-निजाः। तिर्यगादयश्च जरायुजा अण्डजास्स्वेदजाश्च भवन्ति। स्थावरादय उद्भिज्जाः। एवभूता बद्धा बीजांकुरन्यायेन

---

द्रव्ये जीवविभुत्वे सत्येव घटते इति शङ्कितुराशय.। शङ्का परिहरति 'ने'ति। परिहर्तुराशयस्तु अदृष्ट पुण्यपापलक्षणम्। तच्च भगवत्प्रीत्य-प्रीतिजनक जीवकृतविहितनिषिद्ध क्रियानुष्ठानजनित तत्तज्जीवविषये भगवतो निग्रहानुग्रहसङ्कल्परूपमेव। तत एव तत्र तत्र तस्य तस्य नियत भोग्यादेर्जनि. सम्भवतीति कृत जीवविभुत्वेनेति।

**'ब्रह्मणो रुद्र'**, इति। 'ब्रह्मण पुत्राय ज्येष्ठाय' इत्यादिश्रुते., 'धियानिगृह्यमाणोऽपि भ्रुवोर्मध्यात् प्रजापते। सद्योऽजायत तन्मन्युः कुमारो नीललोहितः' ( भाग ३ स्क० १२ अ० ) इत्यादिस्मृतेश्च ब्रह्म-

विषमप्रवाहतयाऽनादिकालप्रवृत्ताविद्याकर्मवासनारुचिप्रकृति-सम्बन्धैश्चक्रवत्परिवर्तमानैर्गर्भजन्मबाल्ययौवनजागरस्वप्नसुषु-प्तिमूर्छाजरामरणस्वर्गनरकगमनादिविविधविचित्रावस्थावन्तो-ऽनाद्यनन्तप्रकारानिदुस्सहतापत्रयाभितप्ताः स्वतः प्राप्तभगवद-नुभवविच्छेदवन्तश्च ।

ते द्विविधाः । शास्त्रवश्याशास्त्रवश्याश्च । तयो-र्मध्ये करणायत्तज्ञानानां बद्धानां शास्त्रवश्यतास्ति । तिर्य-क्स्थावरादीनां नास्ति । शास्त्रवश्या द्विविधा । बुभुक्षवो मुमुक्षवश्चेति । तत्र, बुभुक्षवः त्रैवर्गिकपुरुषार्थनिष्ठा । ते च द्विविधा, अर्थकामपरा धर्मपराश्चेति । केवलार्थकामपरा देहात्माभिमानिनः । धर्मपराश्च अलौकिकश्रेयस्साधनं धर्मः, *चोदनालक्षणोऽर्थो धर्म इति धर्मलक्षणलक्षितयज्ञदानत-पस्तीर्थयात्रादिनिष्ठाः । ते च देहातिरिक्तात्माभिमानिनः पर-लोकोऽस्तीति ज्ञानवन्त । धर्मपरा द्विविधाः, देवतान्तरपरा भगवत्पराश्चेति । देवतान्तरपरा ब्रह्मरुद्राग्नीन्द्राद्याराधन-परा । भगवत्परास्तु *आर्तो जिज्ञासुरर्थार्थीत्युक्ताधिका-रिण. । आर्तः भ्रष्टैश्वर्यकामः । अर्थार्थी अपूर्वैश्वर्यकाम । मुमुक्षवो द्विविधा., कैवल्यपरा मोक्षपराश्चेति । कैवल्य नाम ज्ञानयोगात्प्रकृतिवियुक्तस्वात्मानुभवरूपम् । सोऽनुभावोऽचि-

---

पुत्रत्व महादेवस्य सिद्धम् । पश्वादयो जरायुजा । तापत्रयाभितप्ताः— इति । आध्यात्मिक माधिभौतिकमाधिदैविक चेति तापत्रय दु.खहेतु. । रोगादि सर्पदशादि वज्रपातादि चेति यथाक्रमम् । तैरभितप्ता इत्यर्थः । बद्धाना दुर्दशा श्रीभागवतेपुरञ्जनोपाख्याने, श्रीमल्लोकाचार्यप्रणीते ससारसाम्राज्ये रहस्यग्रन्थे च सम्यङ् निरूपिताऽस्ति ।

शास्त्र वश्याः करणायत्तज्ञाना मनुष्यादय. । शास्त्रावश्या तिर्य-गादयः । कैवल्यपरा.—प्रकृतिवियुक्तज्ञानानन्दस्वरूपस्वात्मानुभवकामा । मोक्षपराः—अनधिकातिशयानन्द.परब्रह्मानुभवकामा. । जीवात्मानन्द-

रादिमार्गेण परमपदं गतवत एव क्वचित्कोणे पति (वियु) त्यक्तपत्नीन्यायेन भगवदनुभवव्यतिरिक्तस्वात्मानुभव इत्याहु । केचित् अर्चिरादिमार्गेण गतस्यापुनरावृत्तिश्रवणात् प्रकृतिमण्डल एव क्वचिद्देशे स्वात्मानुभव इत्याहु. ।

मोक्षपराश्च द्विविधा. भक्ता· प्रपन्नाश्चेति । भक्ता पुनरधीतसाङ्गसशिरस्कवेदाः पूर्वोत्तरमीमांसापरिचयाच्चिदचिद्विलक्षणानवधिकातिशयानन्दरूप निखिलहेयप्रत्यनीक समस्तकल्याणगुणात्मक ब्रह्मावधार्य तत्प्राप्त्युपायभूता साङ्गा भक्ति स्वीकृत्य तया मोक्ष प्राप्तुकामा:१ भक्तावधिकारः त्रैवर्णिकानामेव । देवादीनामप्यस्ति । अर्थित्वसामर्थ्ययोस्सम्भवात् । न शूद्राणामधिकार: । अपशूद्राधिकरणविरोधात् । भक्तिस्वरूपं तु बुद्धिपरिच्छेदे प्रतिपादितम् ॥ भक्ता द्विविधा:, साधनभक्तिनिष्ठास्साध्यभक्तिनिष्ठाश्चेति । साधनभक्तिनिष्ठा व्यासादय. । साध्यभक्तिनिष्ठा नाथादयः ।

आकिञ्चन्यानन्यगतित्वधर्मविशिष्टो भगवन्तमाश्रित प्रपन्न. । स द्विविध., त्रैवर्गिकपरो मोक्षपरश्चेति । त्रैवर्गिकपरो नाम, भगवत एव धर्मार्थकामाभिलाषी । मोक्षपरस्तु सत्सगत्या नित्यानित्यपरवस्तुविवेके सति संसारे निर्वेदाद्वै-

---

स्त्वल्प । शिष्ट स्पष्टम्' हार्दे—हृदि स्थितेऽन्तर्यामिणि परमपुरुषे । आतिवाहिका —गन्तॄणा गमयितार देवा । अर्चिरादिमार्गगतातिवाहिकाः सगृहीता· वात्स्यवरदगुरुभिस्तत्वसारे 'अर्चिरह. सितपक्षानुदगयनाब्दमरुदर्केन्दून् । अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहु ॥' इति । अत्र प्रकरणे वर्णितः ब्रह्मविदुषः शरीरादुत्क्रमणादिप्रकार अर्चिरादिमार्गेण गमनप्रकारश्च, ब्रह्ममीमासायाश्चतुर्थाध्यायद्वितीयतृतीयपादयोर्विचार्य निर्णीतोऽस्ति। कौषीतक्यादौ समासत श्रुतो मुक्तभोगप्रकारः प्रमेयशेखरार्चिरादिरहस्यत्रयसारादिरहस्य ग्रन्थेषु विस्तरशोऽवगन्तव्य ।

राग्ये उत्पन्ने मोक्षेच्छायां जातायां तत्सिध्द्यर्थं *आचार्यो वेदसपन्न इत्याद्याचार्यलक्षणलक्षित गुरु सश्रित्य तद्द्वारा पुरुषकारभूता श्रिय प्रपद्य भक्त्याद्युपायान्तरेषु अशक्तोऽत एवाकिञ्चनोऽनन्यगति श्रीमन्नारायणचरणावेवोपायत्वेन स्वीकरोति (य )स प्रपन्न.। प्रपत्तिस्सर्वाधिकारा । प्रपन्नो द्विविध· । एकान्ती परमैकान्ती चेति । यो मोक्षफलेन साक फलान्तराण्यपि भगवत एवेच्छति स एकान्ती । देवतान्तर-शून्य इत्यर्थः । भक्तिज्ञानाभ्यामन्यत्फल भगवतोऽपि नेच्छति यः स परमैकान्ती । स द्विविधः, दृप्तार्तभेदात् *अवश्यमनु-भोक्तव्यमिति प्रारब्धकर्मानुभवन्नेतद्देहावसानसमयमी ( ये मोक्षमपे) क्षमाणो दृप्तः । जाज्वल्यमानाग्निमध्यस्थितेरिव संसारस्थितेरतिदुस्सहत्वात्प्रपत्त्युत्तरक्षण एव मोक्षकाम आर्तः ।

मुक्तो नाम उपायपरिग्रहानन्तरं नित्यनैमित्तिक-भगवदाज्ञानुज्ञाकैङ्कर्यरूपाणि कर्माणि स्वयम्प्रयोजनतया कुर्वन्, भगवद्भागवताचार्यापचारांश्च वर्जयन्, देहावसानकाले सुकृतदुष्कृते मित्रामित्रयोर्निक्षिपन् *वाङ्मनसीत्यादिप्रकारेण हार्दे परमात्मनि विश्रम्य मुक्तिद्वारभूतसुषुम्नानाडी प्रविश्य तया ब्रह्मरन्ध्रान्निष्क्रम्य हार्देन साकं सूर्यकिरणद्वाराग्निलोक गत्वा दिनपूर्वपक्षोत्तरायणसवत्सराद्यभिमानिदेवताभिर्वायुना

---

'आविर्भूतगुणाष्टक' इति । अनादे कालात् कर्मकृतप्रकृतिसम्ब-न्धतस्तिरोभूतं प्रजापतिवाक्योदितमपहतपाप्मत्वविजरत्वविमृत्युत्व-विशोकत्वविजिघत्सत्वापिपासत्व सत्यकामत्व सत्यसङ्कल्पत्वलक्षण गुणाष्टक जीवात्मनो नैज रूपमुपासनादिप्रसन्नभगवत्सङ्कल्पेनाविर्भवति आत्यन्तिक बन्धनिवृत्तिलक्षणेमोक्षे। तथा च श्रूयते 'एष सम्प्रसादोऽस्मा-च्छरीरात्समुत्थाय पर ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'

च पथि सत्कृत., सूर्यमण्डल भित्त्वा (नभोरन्ध्र)रथचक्ररन्ध्र-द्वारा सूर्यलोक गत्वानन्तर चन्द्रविद्युद्वरुणेन्द्रप्रजापतिभि मार्गप्रदर्शिभिरातिवाहिकगणैस्सह सोपचार तत्तल्लोकान-नीत्य प्रकृतिवैकुण्ठसीमापरिच्छेदिका विरजा तीर्त्वा सूक्ष्म-शरीरं विहाय अमानवकरस्पर्शादप्राकृतदिव्य(मङ्गल-) विग्र-हयुक्तश्चतुर्भुजो ब्रह्मालङ्कारेणालंकृत., इन्द्रप्रजापतिसञ्ज्ञक-नगरद्वारपालाभ्यनुज्ञया श्रीवैकुण्ठाख्य दिव्यनगर प्रविश्य पताकालंकृतदीर्घप्राकारसहितगोपुरमतीत्य ऐरम्मदाख्यामृत-सरस्सोमसवनाख्याश्वत्थ च दृष्ट्वा, *शत मालाहस्ता इत्या-द्युक्तपञ्चशतदिव्याप्सरोगणैरुपचरितो ब्रह्मगन्धादिभिरलङ्कृ-तस्तत्रत्यानन्तगरुडविष्वक्सेनादीन् प्रणम्य तैर्बहुमतो महा-मणिमण्डपमासाद्य पर्यङ्कसमीपे स्वाचार्यान् प्रणम्य पर्यङ्क-समीप गत्वा तत्र धर्मादिपीठोपरि कमले अनन्ते विमलादि-भिश्चामरहस्ताभिस्सेव्यमान श्रीभूमिनीलासमेतं शङ्खचक्रा-दिदिव्यायुधोपेत जाज्वल्यमानकिरीटमकुटचूडावतसमकर-कुण्डलग्रैवेयकहारकेयूरकटकश्रीवत्सकौस्तुभमुक्तादामोदर -बन्धनपीताम्बरकाञ्चीगुणनूपुराद्यपरिमितदिव्यभूषणैर्भूषितम-परिमितोदारकल्याणगुणसागर भगवन्त दृष्ट्वा तत्पादारविन्द-युगल शिरसा प्रणम्य पादेन पर्यङ्कमारुह्य तेन स्वाङ्के स्था-पित. कोऽसीति पृष्टो ब्रह्मप्रकारो (ब्रह्मपरिकरो)(ब्रह्मप्रकाशो) ऽस्मीति उक्त्वा तेन कटाक्षितः तदनुभवजनितप्रहर्षप्रकर्षा-

(छान्दो) इति । ब्रह्ममीमासा चतुर्थाध्याय चतुर्थपादे च मुक्तभोगादि-निरूपित. । 'उत्तरावधिरहिते'ति । विनाशरहितेत्यर्थ । ब्रह्मानुभवे-ऽस्यान्वय. । 'मुक्तस्ये'ति । 'निरञ्जनः परम साम्यमुपैति' इति श्रुत मुक्तस्य परब्रह्मणा साम्य भोगसाम्यम् । 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र० मी०) इति सूत्रात् । न तु सर्वप्रकारतः । 'जगद्व्यापारवर्जं' मित्यु-क्तत्वात् । तस्य नानात्व-मुक्तात्मनो बहुत्व 'मम साधर्म्यमागताः । सर्गे-

-सर्वदेशसर्वकालसर्वावस्थोचितसर्वकैङ्कर्यैकरतिराविर्भूतगुणाष्टक उत्तरावधिरहितब्रह्मानुभववान् यः स मुक्त इत्युच्यते। मुक्तस्य ब्रह्मसाम्यापत्तिश्रुतिस्तु भोगसाम्यमाह, जगद्व्यापारवर्जनस्य प्रतिपादनात्। तस्य नानात्वं सर्वलोकसंचरणं च संभवति।

ननु, मुक्तस्यानावृत्तिप्रतिपादनात् अस्मिन् लोके संचारः कथमिति न शङ्कनीयम्। कर्मकृतस्यैव निषेधात्। स्वेच्छया संचरणस्योपपत्तेः। अतो मुक्तो भगवत्संकल्पायत्तः स्वेच्छया च सर्वत्र संचरति। नित्या नाम कदाचिदपि भगवदभिमतविरुद्धाचरणाभावेन ज्ञानसंकोचप्रसङ्गरहिताः अनन्तगरुडविष्वक्सेनादयः। तेषामधिकारविशेषा ईश्वरस्य नित्येच्छयैव अनादित्वेन व्यवस्थापिताः। एतेषामवतारास्तु भगवदवतारवत् स्वेच्छयैव। एवं बद्धमुक्तनित्यभेदभिन्नो जीवो निरूपितः॥

इति श्रीवाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शारीरकपरिभाषायां जीवनिरूपणं नाम अष्टमोऽवतारः॥



---

-पिनोप जायन्ते प्रलये न व्यथन्ति च' 'मुक्तानां लक्षणं ह्येतत्' 'मुक्तानां परमागतिः' रित्यादिप्रमाणप्रतिपन्नम्। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति च श्रुतम्। सर्वलोकसञ्चरणं च मुक्तानां भगवद्विभूतिविस्तारानुभवेच्छया, भगवदनुयात्रारूपं च भवति। 'स्वेच्छया चे'ति। चकाराद्भगवदिच्छयेत्यपि लभ्यते॥ 'भगवदभिमतविरुद्धे'ति। भगवदभिमतस्य यद्विरुद्धं तदाचरणाभावेनेत्यर्थः। भगवदनभिमतविरुद्धेति पाठान्तरे तु कर्मधारय इति बोध्यम्।

॥ इति अष्टमावतारव्याख्या॥

## ।। अथ नवमोऽवतारः ।।

अथेश्वरो निरूप्यते । सर्वेश्वरत्वं, सर्वशेषित्वम्, सर्वकर्मसमाराध्यत्वम्, सर्वकर्मफलप्रदत्वम्, सर्वाधारत्वम्, सर्वकार्योत्पादकत्वम्, (सर्वशब्दवाच्यत्वम्,) स्वज्ञानस्वेतरसमस्तद्रव्यशरीरित्वमित्यादीनीश्वर लक्षणानि । अयमीश्वरस्सूक्ष्मचिदचिद्विशिष्टवेषेण जगदुपादनकारणं भवति, सकल्पविशिष्टवेषेण निमित्तकारण, कालाद्यन्तर्यामिवेषेण सहकारिकारण च । कार्यरूपेण विकारयोग्य वस्तूपादानकारणम् । कार्यतया परिणामयितृ निमित्तकारणम् । कार्योत्पत्त्युपकरण वस्तु सहकारि । यद्वा उत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया तदनुगुणनियतपूर्वभाव्यवस्थाविशिष्टं यत्तदुपादानम् । यथा, घटत्वावस्थाविशिष्टमृद्द्रव्यापेक्षया पिण्डत्वावस्थाबिशिष्टं तदेव द्रव्यम् । परिणामौन्मुख्यातिरिक्ताकारेणापेक्षित कारण निमि-

---

## ।। अथ नवमावतार व्याख्या ।।

**'सर्वेश्वरत्वं'**मित्यादि । सर्वेश्वरत्वादिक प्रत्येकमीश्वरलक्षण भवति । 'प्रशासितार सर्वेषाम्' (मनु) इति सर्वनियन्तृत्वलक्षण सर्वेश्वरत्व, 'पति विश्वस्य' ( तै० ना ) इति सर्वशेषित्वम्, 'अह हि सर्वयज्ञाना भोक्ता च प्रभुरेव च'( गीता ) इति सर्वकर्मसमाराध्यत्वसर्वकर्मफलप्रदत्वे, 'मत्स्थानि सर्वभूतानि' (गीत) इति सर्वाधारत्वम्' 'द्यावाभूमी जनयन् देव एकः' ( तै० उ० ) इति सर्वकार्योत्पादकत्व, च प्रतिपादितम् । उक्तार्थेषु प्रमाणवचनानि बहूनिसन्ति । **'इत्यादीनी'**ति । आदिपदेन सर्वान्तरात्मत्व सर्व शब्दवाच्यत्व निरूपाधिकविपश्चित्त्वादीनि ग्राह्याणि । लघुलक्षणं चेश्वरस्य विभुचेतनत्वम् । जीवात्मनामणुत्वात् । कार्यरूपेण परिणममान कारण वस्तूपादान मित्युक्तौ ब्रह्मणोऽपि जगदुपादानतयाऽभिमतस्य विकारित्व प्रसज्येतेति अन्यथोपादानत्व निर्वक्ति **'यद्वे'**ति । उत्तरावस्थावतस्तदव्यवहिततदनुगुण पूर्वावस्थ तदेव द्रव्यमुपादानम् इत्यर्थः । अवस्थाविशिष्टावस्थावत्त्वमुपादानत्वम् ।

त्तकारणम् । अस्मिन्पक्षे सहकारिकारणस्य निमित्तेऽन्तर्भाव । एव त्रिविधकारणपक्षे कारणद्वयपक्षे च कारणलक्षणलक्षित-त्वादखिलजगत्कारणत्व भगवतो नारायणस्यैव सम्भवति ।

ननु, कथ नारायणे कारणत्वपर्यवसानमिति चेत्, उच्यते न्यायसहकृतवेदान्तवाक्यविचारेणैवं पर्यवस्यति । तद्यथा । आदौ तावत्, प्रकृतेर्जगत्कारणत्व नोपपद्यते । ई(ईक्षितृत्वा) क्षत्याद्यभावात् । छान्दोग्ये तावत्, सदाकाश-प्राणशब्दवाच्याना जगत्कारणत्व प्रतीयते । वाजसनेयके ब्रह्मशब्दवाच्यस्य जगत्कारणत्वं प्रतीयते । सर्वशाखाप्रत्यय-न्यायेन कारणवाक्यानामेकविषयत्वे प्रतिपादयितव्ये छाग-पशुन्यायेन सामान्यवाचकानां सदादिशब्दाना विशेषे ब्रह्मणि पर्यवसानं वक्तव्यम् । एवमुक्तन्यायेन ब्रह्मशब्दस्य तैत्तिरीयो-क्तात्मशब्दवाच्ये पर्यवसाने, आत्मशब्दवाच्यः क इत्याका-क्षाया श्रुतिप्रसिद्ध इन्द्रो वा, तथा प्रसिद्धोऽग्निर्वा, उपास्य-त्वेन प्रसिद्धस्सूर्यो वा, कारणत्वेनोक्तस्सोमो वा; अभीष्टप्रद-त्वेनोक्त. कुबेरो वा, यमो वा, वरुणो वेति संशये एतेषा

---

वशिष्ट्य च स्वाव्यवहितपूर्वत्वस्वसामानाधिकरण्यो भयसम्बन्धेन । आगन्तुकापृथक्सिद्धधर्मोऽवस्था । भगवतश्च स्थूलचिदचिन्नियन्तृत्वविशिष्टस्य कार्यावस्थावत. सूक्ष्मचिदचिन्नियन्तृत्वविशिष्टत्वरूपपूर्वावस्था-योगादुपादानत्व सम्भवत्येव स्वरूपपरिणामाभावेऽपीति भाव । कारणलक्षणलक्षितत्वात्—उपादानादिकारणलक्षणयुक्तत्वात् । जगत्कारणत्व जगदेककारणत्वम् । नारायणस्यैवेत्येवकारेण तदन्यस्य निखिल-जगत्कारणत्व व्यवच्छिद्यते ब्रह्मरुद्रादेस्तत्सृज्यकोटिघटितस्य । **'यतो-वे'**त्यादिवाक्योक्तेन जगत्कारणत्वेन लक्षणेनलक्षित परब्रह्मत्व 'एको-हवैनारायण आसीन्नब्रह्मा नेशान' ( महो० ) इति वाक्यप्रतिपन्नस्य नारायणस्यैवेति च विवक्षितमत्र ।

**एवं पर्यवस्यति**—नारायण एव जगत्कारणमिति पर्यवस्यति । **'न्यायसहकृते'**ति । सर्वशाखाप्रत्ययसामान्यविशेष न्यायसहकृतेन वेदा-

कर्मवश्यत्व परिच्छिन्नैश्वर्यवत्त्वसंहार्यत्वश्रवणान्नैते जगत्कारणभूता । किंतु श्वेताश्वतरे शिवस्य कारणत्वं भासते । एवमथर्वशिखायां शम्भुशब्दवाच्यस्य ध्येयत्वं, कारणत्वं च भासते । तथैवाथर्वशिरसि रुद्रशब्दवाच्यस्य सर्वात्मकत्वमुच्यते । तैत्तिरीये हिरण्यगर्भस्य जगत्कारणत्वं प्रतीयते । अत्रापि सामान्यविशेषन्यायात् शिवशम्भुरुद्रशब्दानां हिरण्यगर्भशब्दवाच्ये विशेषे पर्यवसानं युज्यते । शिवशब्दस्य *शिवमस्तु सर्वजगताम् * शिवं कर्मास्तु * शिवास्ते सन्तु पन्थान इत्यादिभिर्मंगलवाचित्वम्, रुद्रशब्दस्याग्निवाचकत्वम् । एवं महेश्वरशम्भ्वादिसामान्यशब्दा अप्यवयवशक्त्या चतुर्मुखे पर्यवस्यन्ति । कारणवाचिशिवादिशब्दानां मुख्यवृत्त्या रुद्रपरत्वं किं न स्यादिति न शङ्कनीयम् । रुद्रस्य चतुर्मुखादुत्पत्तिश्रवणात् अनपहतपाप्मत्वश्रवणाच्च न रुद्रस्य कारणत्वम् । अतो हिरण्यगर्भप्रजापतिस्वयंभ्वादिशब्दवाच्ये चतुर्मुखे शिवादिशब्दा पर्यवस्यन्ति । एवं महोपनिषन्नारायणोपनिषत्सुबालोपनिषन्मैत्रायणीयपुरुषसूक्तनारायणानुवाकान्तर्यामिब्राह्मणादिषु नारायणस्यैव परमकारणत्वं सर्व-

---

न्तवाक्यपरामर्शेन ब्रह्ममीमांसात्मकेनेत्यर्थ । 'सर्वशाखे'ति । सर्वशाखागतकारणवाक्यानामेकार्थविषयकत्वं सर्वशाखाप्रत्ययन्यायेन लभ्यते । सामान्यविशेषन्यायेन च सदादिशब्दानां ब्रह्मणि, ब्रह्मशब्दस्य आत्मनि चेतने, आत्मशब्दस्य च शिवे, शिवशब्दस्य च सामान्यशब्दत्वाद्धिरण्यगर्भे पर्यवसानं भवति । हिरण्यगर्भशब्दस्य च नानार्थस्य महोपनिषदादिप्रतिपाद्ये नारायण एव पर्यवसानं फलति । इति पिण्डितार्थ. ।

गायत्रीप्रतिपाद्यान्तरादित्यविद्यायां भर्गशब्दश्रवणाद्रुद्रपरत्वशङ्का प्रसक्ता प्रतिषेधति नन्वित्यादिना । अकारान्त एव भर्गशब्दो रुद्रवाची । 'हरस्स्मरहरो भर्ग' इति कोशात् । मन्त्रे तु सकारान्तो भर्गश्शब्दोऽस्ति । स च तेजोवाची । निरतिशयतेजस्त्वं च मुक्तोपसृप्यस्य परज्योतिषो दिव्यमूर्तेरप्राकृतपरमव्योमनिलयनस्य 'दिव्यो देव एको

शब्दवाच्यत्वमोक्षप्रदत्व जगच्छरीरकत्वादिप्रतिपादनात्, स्वयंभूहिरण्यगर्भप्रजापतिशब्दानां नारायणे पर्यवसानं युक्तमिति नारायण एवाखिलजगत्कारणं सर्वविद्यावेद्यश्च ।

ननु, (नतु) अन्तरादित्यविद्या रुद्रपरेति शङ्का (नु) न कर्तव्या । तस्याः विष्णुपरत्वस्यैव बहुप्रमाणसिद्धत्वात् । (हरस्स्मरहरोभर्ग इत्यकारान्त एव रुद्रपरः) भर्गश्शब्दस्य सकारान्तत्वप्रतिपादनाच्च । तर्हि दहरविद्यायामाकाशशब्दवाच्यनारायणान्तर्यामितया रुद्रस्य प्रतिपादनात् दहरविद्या रुद्रपरेति न शङ्कनीयम् । नारायणान्तर्वर्तिगुणजातस्यैवोपास्यत्वेन तत्राभिधानात् । एवं सर्वविद्यास्वप्यूह्यम् । अतस्समस्तकल्याणगुणात्मकः प्रकृतिपुरुषाभ्यां भिन्नस्तद्विशिष्टः परब्रह्म नारायण एव जगत्कारणम् ।

ननु, अद्वैतश्रुत्या ब्रह्मैकमेव सत्यं निर्गुणं च । तदन्यत् ज्ञातृज्ञेयादिकं तस्मिन्नेव परिकल्पितं सर्वं मिथ्या । ब्रह्म अविद्यया संसरति । * तत्त्वमसीत्याद्यभेदज्ञानं तन्निवर्त-

---

नारायणः' (सुबाले) इति श्रुतिप्रसिद्धस्य श्रीमतो नारायणस्यैव सङ्गच्छते । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः' इत्यादि बहुप्रमाणप्रसिद्धिश्च तस्यैव । अतोऽन्तरादित्यविद्या श्रीमन्नारायणविषयैवेति हार्दम् ।

नन्वेवमपि 'शम्भुराकाशमध्येध्येयः' ( अ० शि० ) इति श्रवणात् नारायणस्य च दहराकाशरूपत्वात्तदन्तर्वर्ती शम्भुरेव ध्येय इत्यायातः, दहरविद्यायां तस्मिन् यदन्तस्तदुपासितव्यमिति वचनादित्याशङ्कामनूद्य निरस्यति 'तर्हि' इत्यादिना । दहरविद्यायां 'किं तदन्तर्वर्तते यदन्वेष्टव्य'मिति स्वयमेव विजिज्ञास्य 'तस्मिन् कामाः समाहिताः' इति काम्यमानानां कल्याणगुणानामेव तदन्तर्वर्तित्वं वर्णितम् । ते च कामा अपहतपाप्मत्वादयः सत्यसङ्कल्पत्वान्ताः 'एष आत्माऽपहतपाप्मा ××× सत्यसङ्कल्पः' इत्युत्तरवाक्येनाभिहिताः । ततश्च दहराकाशस्य हार्दस्य परमपुरुषस्य तदन्तर्वर्तिगुणजातस्यैव च दहरविद्यायामुपास्य-

कम् । तस्मात् निर्विशेषचिन्मात्रे ब्रह्मणि वेदान्ताना तात्पर्यमिति मतान्तरस्थैः प्रतिपादनात् कथ नारायणे तात्पर्य, तस्य समस्तकल्याणगुणात्मकत्वादिकथनचेति चेत् । उच्यते । कारणत्वप्रतिपादकश्रुतिभि नारायणस्य कारणत्वे सिद्धे भेदाभेदश्रुत्योर्घटकश्रुत्या विषयभेदेन विरोधे परिहृते, निर्गुणप्रतिपादकश्रुतीना हेयगुणनिषेधकत्वात्, ज्ञातृज्ञेयादिकल्पकाविद्याया एवाप्रामाणिकत्वाद्ब्रह्मकार्यस्य सत्यत्वात्, अविद्यया-ससारे जीवगतदोषाणा ब्रह्मण्यपि संभवात्, तन्निवर्तकान्तरस्य वक्तुमशक्यत्वात् । अतोऽद्वैतवादस्यासंभवान्न निर्विशेषचिन्मात्रब्रह्मसिद्धिः । अतो नारायणस्यैव जगत्कारणत्वमोक्षप्रदत्वादिगुणयोगस्संभवतीति सविशेषमेव ब्रह्म । सूक्ष्मचिदचिद्विशिष्ट ब्रह्म कारणम्,स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति कारणादनन्यत्कार्यमिति विशिष्टाद्वैत वेदान्तिना सप्रदाय. ।

---

त्वात् न रुद्रस्यात्र गन्धोऽपि विद्यत इत्याशय । एव तर्हि अथर्वशिखादिवाक्याना का गतिरित्यत्राह 'एवं सर्वविद्यास्वप्यूह्यम्' इति । सर्वैश्वर्यसम्पन्न. शम्भुराकाशमध्ये ध्येय इति वाक्ये हृदयसुषिराकाशवर्ती विश्वकल्याणकारी 'विश्वशम्भुवम्' 'शाश्वत शिवमच्युतम्' ( तै० ना० ) इति श्रुत स्वयम्भूश्शम्भुरादित्य., रुद्रोबहुशिरा' इति नामसहस्रे गीत श्रीमान्नारायण एव शम्भुशब्देनानूद्य मुमुक्षुध्येयत्वेनोच्यते इति समन्वय कृत । यत्रयत्रोपासनाप्रकरणे शिवेन्द्रादिजीवलिङ्गाना सद्भाव, तत्र तत्र शिवेन्द्रादिशरीरकपरमात्मोपासन विवक्षितम् । सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकादिषु द्रष्टव्यो विस्तरः । तद्विशिष्टः—प्रकृतिपुरुषविशिष्ट. । वैशिष्ट्यच च शरीरात्मभावत. । अत्राय तत्वसारीयश्लोकस्समुदाहर्तव्य.—कस्त्व तत्वविदस्मि वस्तुपरम किंतर्हि विष्णुः कथं तत्त्वेदम्पर तैत्तिरीयकमुखत्रय्यन्तसदर्शनात् । अन्य स्तर्हिगिरिः कथ गुणवशादत्राह रुद्र कथ तद्द्रष्ट्या कथमुद्भवत्यवतरत्यन्यत् कथ नीयताम् ।। इति ।।

एवमीश्वरांगीकारात् निरीश्वरसाङ्ख्यमीमांसकादिमतनिरासः। एतस्यैवोपादानत्वस्वीकारात् योगपाशुपतनैयायिकमतनिरासः। तैर्निमित्तकारणमात्रेश्वराङ्गीकारात्। ईश्वरस्य कार्यं प्रत्युपादानत्वनिमित्तत्ववत्कर्तृत्वप्रेरकत्वनियन्तृत्वप्र (शासि) काशयितृत्वानुमन्तृत्व सहकारित्वोदासीनत्वादिकमप्युपपद्यते। बाल्ययौवनावस्थादयो दोषा यथा शरीरगता न तु शरीरिणि जीवे। एवं चिदचिच्छरीरिण परमात्मनोऽपीति न निर्विकारश्रुतिविरोधः। नियमेन तदाधेयत्व–विधेयत्व–शेषत्वादेः शरीरलक्षणस्य जगति विद्यमानत्वाज्जगच्छरीर ईश्वरस्तद्गतदोषैरसंसृष्टश्च।

स चेश्वरो विभुस्वरूपश्च। विभुत्वं नाम व्यापकत्वम्। तच्चेश्वरस्य त्रिधा; स्वरूपतो धर्मभूतज्ञानतो विग्रहतश्च। स चानन्त इत्युच्यते। अनन्तो नाम त्रिविधपरिच्छेदरहितः। त्रिविधपरिच्छेदस्तु, देशत. कालतो वस्तुतश्च। सत्यत्व ज्ञानत्वानन्दत्वामलत्वादय ईश्वरस्य स्वरूपनिरूपकधर्मा.। ज्ञानशक्त्यादयस्तन्निरूपितस्वरूपधर्मा.। सर्वज्ञत्व

---

मतान्तरस्थै —शाङ्करमतनिष्ठैः। तात्पर्य—वेदान्ताना तात्पर्यवर्णनम्। तस्य—नारायणस्य। इति शब्दार्थ.॥ अद्वैतमत प्रक्रिया शङ्कते 'ननु' इति। विशिष्टाद्वैतिना मते सर्वश्रुतिसमन्वय स्वरससिद्ध प्रदर्शयन् अनूदिते शाङ्करपक्षेऽसामञ्जस्य प्रपञ्चयति 'उच्यते' इत्यादिना। घटकश्रुत्या—शरीरात्मभाव प्रतिपादिकया भेदाभेदश्रुत्योरविरोधेनसङ्घटयित्र्या श्रुत्या। 'विषयभेदेने'ति। प्रकारप्रकारिणोः प्रकाराणा च मिथो भेदपरा भेदश्रुतयः। अभेदश्रुतय सर्व खल्विद ब्रह्म' 'अयमात्मा ब्रह्म' इत्यादयो विशिष्टैक्यपरा.। एवमुपगमेन भेदाभेद श्रुत्योः परस्पर विरोधो नास्त्येव। अभेदश्रुतेर्जगद्ब्रह्मणो स्वरूपैक्यपरत्वे ब्रह्मभिन्नजगद्बाधपरत्वे वा स्वीक्रियमाणे तु ब्रह्मण सदोषत्वापत्तिर्भेद श्रुतिबाधापत्तिश्चेति भाव.। सगुणनिर्गुणश्रुत्योर्विरोधपरिहार उत्सर्गापवाद न्यायेन विहितशुभगुणव्यतिरिक्त प्राकृतगुणनिषेधपरत्वोपग-

सर्वशक्तित्वादयः सृष्ट्युपयुक्तधर्माः। वात्सल्यसौशील्यसौलभ्यादयः आश्रयणोपयुक्तधर्माः। कारुण्यादयो रक्षणोपयुक्तधर्माः। एतेषां स्वरूपं बुद्धिपरिच्छेदे निरूपितमिति नेह प्रपञ्च्यते।

अयमीश्वर अण्डसृष्ट्यनन्तरं चतुर्मुखदक्षकालादिष्वन्तर्यामितया स्थित्वा सृष्टिं करोति। विष्ण्ववतार रूपेण मनुकालाद्यन्तर्यामिरूपेण च स्थित्वा रक्षको भवति। रुद्रकालान्तकादीनामन्तर्यामितया संहारमपि करोति। अतः सृष्टिस्थितिसंहारकर्ता चेति। एवंप्रकार ईश्वरः परव्यूहविभवान्तर्याम्यर्चावताररूपेण पञ्चप्रकारः। तत्र परो नाम त्रिपाद्विभूतौ कुमुदकुमुदाक्षपुण्डरीकवामनशंकुकर्णसर्प (र्व) नेत्र-

---

मान्निर्गुणश्रुतेरुपपादितं। 'अविद्यायाः' इति। प्रकृतिकर्मज्ञानाभावव्यतिरिक्तायाअद्वैतिभिरुपगतायाः अप्रामाणिकत्वादित्यर्थः। 'संसारे' इति। ब्रह्मण इत्यादि.। 'तन्निवर्तके'ति। ब्रह्मस्वरूपाच्छादिकाया अविद्याया अतिबलीयस्त्वाद्दुर्निवारत्वमेव स्यात्। अविद्याकार्यवाक्यजन्यं ज्ञानमेवाविद्यानिर्तकं भविष्यतीति च मतमाशामोदकायितमिति भाव.। व्यापकत्व—सर्वद्रव्यसंयोगित्वम्। 'विग्रहत' इति। विराड्रूपत.। 'त्रिविधे'ति। सर्वदेशकालवस्तुव्यापित्वं सर्वान्तरात्मत्वलक्षणम्।

'अयमीश्वर' इति। अण्डसृष्टिपर्यन्तसमष्टिसृष्टिं स्वयं करोति। तदनन्तरं चतुर्मुखाद्यन्तर्यामितया व्यष्टिसृष्टिं करोतीत्यर्थः। अत्र 'ब्रह्मादक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयोहरेरेता जगतस्सृष्टिहेतव.॥ विष्णुर्मन्वादय. कालः सर्वभूतानि च द्विज। स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलये ह्येते जनार्दनविभूतयः॥' इति विष्णुपुराणवचनान्युदाहर्तव्यानि प्रमाणतया। 'एवंप्रकार' इति। एवम्भूतः सर्वेश्वरः स्वरूपत एक एव स्वासाधारणदिव्यरूपविशिष्टः स्वदिव्यरूपमधिष्ठाय निजेच्छया पञ्चप्रकारकृत्वा पञ्चप्रकाररूपविशिष्टः पञ्चधावस्थितः परव्यूहादिनामभेदत इत्यर्थ.। तत्र परः दिव्यमङ्गलविग्रहविशिष्टः श्रीवैकुण्ठनिलय. श्रीभूनीलानायको नित्यमुक्तानुभाव्यः परवासुदेव इति प्रसिद्धः।

सुमुखसुप्रतिष्ठितादिभिः दिव्यायुधभूषणपरिजनपरिच्छदान्वितैर्दिव्यनगरपालकैः परिरक्षिते श्रीमद्वैकुण्ठाख्ये पुरे चण्डप्रचण्डभद्रसुभद्रजयविजयधातृविधातृप्रभृतिभिर्द्वारपालकैरुपेते श्रीमद्दिव्यालये श्रीमहामणिमण्डपे धर्माद्यष्टपादविरचितसिंहासने शेषपर्यङ्के चतुर्भुजदिव्यमङ्गलविग्रहविशिष्टः श्रीभूनीलादिसहितः शङ्खचक्रादिदिव्यायुधोपेतः किरीटादिदिव्यभूषणभूषितः अनन्तगरुडविष्वक्सेनादिभिर्नित्यैस्सामगानपरैरन्यैर्मुक्तैश्चानुभूयमानो ज्ञानशक्त्याद्यनन्तकल्याणगुणगणविशिष्टः परब्रह्मपरवासुदेवादिशब्दवाच्यो नारायणः ।

व्यूहो नाम, पर एवोपासनार्थं जगत्सृष्ट्याद्यर्थं च वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धभेदेन चतुर्धाऽवस्थितः । तत्र षाड्गुण्यपरिपूर्णो वासुदेवः । ज्ञानबलाभ्यां सङ्कर्षणः । ऐश्व-

---

'वैकुण्ठे तु परे लोके श्रीसहायो जनार्दनः, उभाभ्यां भूमिनीलाभ्यां पार्श्वद्वयसुशोभितः ॥' 'वैकुण्ठे तु परे लोके नित्यत्वेन व्यवस्थितम् । पश्यन्ति च सदादेव नेत्रैर्ज्ञानैनचामराः ॥' (पाञ्चरात्रे) इत्यादि प्रमाणमत्रानुसन्धेयम् । भगवतः पञ्च प्रकारा इमे भगवतैव विष्वक्सेनं प्रत्युपदिष्टाः 'मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः । परोव्यूहश्च विभवो नियन्ता सर्वदेहिनाम् । अर्चावतारश्च तथा दयालुः पुरुषाकृतिः ॥' इति

( पाञ्चरात्र० विष्वक्० सं० )

'व्यूह' इति । षट्सुगुणेषु गुणद्वयं व्यूह्य विभज्य उद्रिक्तगुणद्विकमूर्तिकतयाऽवस्थितः सङ्कर्षणादिः व्यूह उच्यते । व्यूहवासुदेवस्तु सङ्कर्षणादेरादिभूतः षड्गुणक एवोपास्यः । स चायं परवासुदेवात् प्रकटीभूतः । सर्वेषु रूपेषु परमात्मा चेतनस्त्वेक एवेति बोध्यम् । '**उपासनार्थ**'मिति । 'चतुर्विधः स भगवान् मुमुक्षूणां हिताय वै । अन्येषामपि लोकानां सृष्टिस्थित्यन्तसिद्धये ॥' 'उपासकानुग्रहार्थं जगतो रक्षणाय च' ( विष्वक्सेन संहिता ) इति वचनमत्रानुसन्धेयम् । माण्डूक्ये च चतुर्व्यूहोपासनमेव व्यस्तसमस्तप्रणवकरणकं मोक्षार्थं विहितमिति श्रीकूरनारायणमुनिभिर्भाषितम् । अत्र 'षाड्गुण्याद्वासुदेवः पर इति स भवान्

र्यंवीर्याभ्यां प्रद्युम्नः । शक्तितेजोभ्यामनिरुद्ध इति गुण-विभाग. । एतेषु चतुर्षु प्रत्येक त्रयस्त्रयोऽवतीर्णाः केशवादयो व्यूहान्तराणि द्वादश द्वादशमासानां द्वादशादित्यानांचाधिदैव-तानि । ऊर्ध्वपुण्ड्रेषु च तेषामवस्थापन विधीयते । तत्र कनकप्रभ. केशवश्चतुश्चक्रधरः । श्यामो नारायणश्चतुश्शङ्ख-धरः । मणिप्रभाभो माधवश्चतुर्गदः । चन्द्राभो गोविन्दश्च-तुश्शार्ङ्ग. । पद्मकिञ्जल्कसनिभो विष्णु. चतुर्हलः । अब्जाभो मधुसूदनश्चतुर्मुसलः । अग्निवर्णस्त्रिविक्रमश्चतुःखड्गः । बाल-सूर्याभो वामनश्चतुर्वज्रधरः । पुण्डरीकाभ. श्रीधर. चतु पट्ट-सधरः । तटित्प्रभो हृषीकेशश्चतुर्मुद्गरधरः । सूर्याभ. पद्म-नाभः पञ्चायुधधरः । इन्द्रकोपनिभो दामोदरः चतुष्पा-शधरः ।

---

मुक्तभोग्यो, बलाढ्यात् बोधात् सङ्कर्षणस्त्व हरसि वितनुषे शास्त्रमै-श्वर्यं वीर्यात् । प्रद्युम्नस्सर्गधर्मौ गमयसि भगवन् शक्तितेजोऽनिरुद्धो बिभ्राणः पासि तत्त्व गमयसि च तथा व्यूह्य रङ्गाधिराज ॥' इति ( श्रीरङ्ग-उत्तर ) पद्य मनुसन्धेयम् । 'ज्ञानबलाभ्याम्' इति । कार्यव-शादुद्भूताभ्यामिति शेषः । एव मन्यत्रापि गुणद्विके बोध्यम् । 'ऊर्ध्व-पुण्ड्रेषु चे'ति । द्वादशसूर्ध्वपुण्ड्रेषु केशवादिना न्यासो विधीयत इत्यर्थः । 'शरीररक्षकाश्चैते ध्यायिना खेदशान्तये ॥' (पाञ्चरात्रे) इति च श्रूयते । **मणिप्रभ** इति । इन्द्रनीलमणिनिभश्याम इत्यर्थः । **'चतुर्गदः'** इति । चतुर्गदाधर इति पाठान्तरम् । एवमग्रेऽपि चतुश्शार्ङ्गधर इत्यादि बोध्यम् । 'पुरस्तात् केशवः पातु चक्री जाम्बूनदप्रभ.' इत्यादि द्वादशनामपञ्जरस्तोत्रे केशवादीनामेतेषां वर्णायुधभेदोमू लोक्तप्रकारेण-वर्णितोऽस्ति ।

**'षट्त्रिंशद्भेदभिन्ना'** इति । यद्यप्यहिर्बुध्न्यसहिताया एकोन चत्वारिंशदुक्ता विभवा. । अथापि तेषु कपिलदत्तात्रेयपरशुरामाणामा-वेशावतारत्वेन गौणत्वान्मुख्यावतारा षट्त्रिंशदिति विष्वक्सेनसंहि-ताया वर्णनादत्रापि तथवोक्तम् । **'पुनर्दधिभक्ते'**ति । एकैकस्माद्विभवात् प्रादुर्भूताः प्रादुर्भावान्तरसज्ञका विभवा दधिभक्तादय ,इत्यर्थ. । एतस्य

विभवो नाम तत्तत्सजातीयरूपेणाविर्भावः। स प्रसिद्धिप्राधान्येन दशधा। ते च मत्स्यकूर्मादयोऽवतारविशेषाः। तत्र वेदापहारिदैत्यनिरासपूर्वकं ब्रह्मणे वेदप्रमाणप्रदानार्थमवतीर्णो मत्स्यावतारः। देवानामजरामरणहेतुभूतामृतोत्पादनमन्दराधारत्वेनावतीर्णः कूर्मावतारः। संसारसागरनिमग्नजनोद्धरणकाम (भूम्युद्धरणार्थं) स्वमहिषीमुद्धर्तुमवतीर्णो वराहावतारः। आश्रितरक्षणार्थं महासुरगृहस्तम्भोद्भूतो नरसिंहावतारः। त्रिविक्रमो भूत्वा स्वपादारविन्दोद्भवेन जलेन जगत्पापापहरणेन जगद्रक्षणार्थमवतीर्णो वामनावतारः। दुष्टक्षत्रियनिरसनार्थमवतीर्णः परशुरामावतारः। शरणागतरक्षणधर्मसंस्थापनार्थमवतीर्णो (श्रीरामः) (रामचन्द्र) रामावतारः। प्रलम्बादिनिरसनार्थमवतीर्णो बलभद्रावतारः। मोक्षोपायप्रदानार्थमवतीर्णः (श्रीकृष्णः) कृष्णावतारः। अधर्मिष्ठान्निरस्य पूर्णधर्मप्रवर्तनार्थ(र्थंकलिनिर्मोचनार्थ)मवतीर्णः कल्क्यवतारः। एवं दशावतारेष्वप्येकैकावतारोऽनन्तप्रकारः। पद्मनाभादयोऽपि षट्त्रिंशदवताराः सन्ति। पुनर्दधिभक्तहयग्रीवनरनारायणादयोऽपि। एवमेते मुख्यगौणपूर्णांशावेशाख्यावान्तरभेदेन बहुप्रकाराः। तेषूपास्यानुपास्यविभागो द्रष्टव्यः। अवताराणामिच्छैव हेतुः। न तु कर्म। प्रयोजनं तु दुष्टनिरासपूर्वकसाधुपरित्राणमेव।

---

सर्वस्यार्थस्य विवरणं तत्त्वत्रयभाष्ये ईश्वरप्रकरणे द्रष्टव्यम्। अत्रेदं बोध्यम्। क्वचित् 'तद्धि वासुदेवाख्यं परं ब्रह्म सम्पूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैः ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक् प्राप्यते' इत्युक्तम् (भगवच्छास्त्रे)। 'विभवार्चनात् व्यूहं प्राप्य व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं प्राप्यते' इति। एवम् 'अर्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत्। विभवोपासने पश्चाद्व्यूहोपास्तौ ततः परम्। सूक्ष्मे तदनु शक्तस्स्यादन्तर्यामिणमीक्षितुम्' इति च। क्वचिद्विभ-

अन्तर्यामित्व नाम स्वर्गनरकाद्यनुभवदशायामपि जीवात्मनः सुहृत्त्वेन योगिभिर्द्रष्टव्यतया हृदयप्रदेशावस्थितरूपम् । जीवेन साकं विद्यमानोऽपि तद्गतदोषैरसंस्पृष्टो वर्तते ।

अर्चावतारो नाम देशकालविप्रकर्षरहित. आश्रिताभिमतद्रव्यादिक शरीरतया स्वीकृत्य तस्मिन्नप्राकृतशरीरविशिष्टस्सन्नर्चकपराधीनस्नानभोजनासनशयनस्थिति. सर्वसहिष्णु परिपूर्णो गृहग्रामनगरप्रशस्तदेशशैलादिपु वर्तमानो मूर्तिविशेषः । स च स्वयंव्यक्तदैवसैद्धमानुषभेदाच्चतुर्विध । एवमुक्तासु पञ्चावस्थास्वपि श्रीविशिष्ट एव भगवान् वर्तत इति श्रुत्यादिप्रमाणसिद्धोऽर्थ. । एतेनैकायनोक्तनिः श्रीकवादनिरास । एवमोश्वरी निरूपितः ॥

इति श्रीवाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकाया शारीरकपरिभाषाया मीश्वरनिरूपण नाम नवमोऽवतार ॥



---

वाद्युपासनस्यापि साक्षान्मोक्ष साधनत्व च श्रूयते । अत्र श्रीमन्निगमान्तमहादेशिकैरित्थ व्यवस्थापितं न्यायसिद्धाञ्जने–तत्तत्फलकामनया, उत्तरोत्तरमूलरूपोपासनाधिकारसम्पत्तिकामनया वाऽर्चाद्युपासने तत्तदपेक्षितसिद्धिर्भवति । व्यापकमन्त्रेण मुमुक्षयाऽर्चाद्युपासने क्रियमाने पुनर्मोक्षफल तेपामुपासकाना हस्तापचेय भवतीति ॥ 'श्रीविशिष्ट एवे'ति । 'अस्येशाना जगतो विष्णुपत्नी' ( तैत्ति ) 'श्रीवत्सवक्षा नित्यश्री ' ( रामा० युद्ध ) 'नित्यैवेषा जगन्माता विष्णोः श्रीरनपायिनी । देवत्वे देवदेहेय मनुष्यत्वे च मानुपी । विष्णोर्देहानुरूपा वै करोत्येपात्मनस्तनुम्' (वि० पु०) इत्यादि प्रमाणबलादित्यर्थः । 'शान्तानन्ते'ति श्लोकश्चतुः श्लोकीस्थोऽत्रानुसन्धेय । एकायना —माध्वाः । तन्मते विष्णुरेव प्राप्यः । न तु लक्ष्मीविशिष्ट इति ॥ श्रीसम्प्रदाये तु श्रीविशिष्ट एव प्राप्य इति वैशिष्टचम् ॥

॥ इति नवमावतार व्याख्या ॥

## ॥ अथ दशमोऽवतारः ॥

एवं द्रव्यनिरूपणानन्तरं क्रमप्राप्तमद्रव्यं निरूप्यते। संयोगरहितमद्रव्यम्। तदद्रव्यं च सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धास्संयोगश्शक्तिरिति दशप्रकारमेव। तत्र प्रकाशसुखलाघवादिनिदानमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं सत्त्वम्। तद्द्विविधम्। शुद्धसत्त्वं मिश्रसत्त्वं चेति। रजस्तमश्शून्यद्रव्यवृत्तिसत्त्वं शुद्धसत्त्वम्। तन्नित्यविभूतौ। उपचारात्तत्प्रवर्तकेश्वरे च। रजस्तमस्सहवर्तिसत्त्वं मिश्रसत्त्वम्। तत्त्रिगुणे तत्सम्बन्धिनि जीवे चोपचारात्। रागतृष्णालोभप्रवृत्त्यादिनिदानमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं रजः। प्रमादमोहादिनिमित्तमतीन्द्रियं शक्त्याद्यतिरिक्तमद्रव्यं तमः। त्रीण्यप्येतानि यावत्प्रकृतिव्याप्तानि, प्रकृतिवश्यपुरुषसंबद्धान्यनित्यानि, नित्यसन्तानानि, प्रलयदशायां समानि, सृष्ट्यादौ विषमाणि, सृष्टिस्थितिसंहारोपयुक्तानि, ईश्वरसङ्कल्पा-

---

## ॥ अथ दशमावतार व्याख्या ॥

'संयोगे'ति। अद्रव्यम्—द्रव्यभिन्नं सद्वस्तु। संयोगरहितपदार्थत्वं तल्लक्षणम्। सत्त्वगुणस्य लक्षणमाह 'तत्र प्रकाशे'ति। दशाद्रव्यघटकं सत्त्वं प्रकाशादिहेतुभूतं शक्त्यादिभिन्नमतीन्द्रियं कार्यानुमेयमद्रव्यमित्यर्थः। 'सत्त्वं लघु प्रकाशकम्' (सां–का) 'तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्' (गीता) इत्यादि सत्त्वस्य प्रकाशादिहेतुत्वे मानम्। कार्यसामान्यहेतुकारणगतशक्तचदृष्टयोरतिव्याप्तिवारणाय शक्त्याद्यतिरिक्तमित्युक्तम्। कालेऽतिव्याप्तिर्नैव, अद्रव्यमित्युक्तत्वात्। अतीन्द्रियमिति तु गुणानां स्वरूपकथनं न तु लक्षणे प्रविष्टम्। एते च गुणा उद्भूताः शरीरे कार्यैरनुमेयाः। यथोक्तं गीतायां 'सर्वद्वारेषु कौन्तेय' इत्यादि (अ० १४-११) श्लोकत्रयेण। नित्यसन्तानानि—प्रवाहतो नित्यानि। विषमाणि—उद्भवाभिभवाभ्याम्। सृष्ट्युपयुक्तं रजः, रक्षणोपयुक्तं सत्त्वम्, संहारोपयुक्तं तम इति च विवेकः। ईश्वर-

दिसहकारिभेदात्परस्पराभिभवोद्भवकराणीत्येतानि साधारणानि । सत्त्वगुणस्तु सम्यग्ज्ञानरूपसुखादिहेतु मोक्षप्रदश्च । रजोगुणस्तु रागाद्यात्मकः कर्मसङ्गी दुःखादिहेतु स्वर्गाद्यामुष्मिकप्रदश्च । तमोगुणस्तु अज्ञानरूपालस्यादिहेतु. नरकप्रदश्च । अतस्सत्त्वादयो गुणा. न द्रव्यरूपा. ।

अस्मदादिश्रोत्रग्राह्य पञ्चभूतवर्ती शब्द । स च द्विविध, वर्णात्मकोऽवर्णात्मकश्चेति । अकचटतपयादिपञ्चाशदक्षरात्मको वर्णात्मक । स देवमनुष्यादिताल्वादिव्यङ्ग्यः । भेर्यादिजन्योऽवर्णात्मकः । एवभूतश्शब्दः श्रोत्रेन्द्रियेण गृह्यते । श्रोत्रेन्द्रियगमनाद्वा व्यञ्जकवाय्वागमनाद्वाशब्दग्रहः । ननु, श्रुत्या शब्दस्य द्रव्यत्व प्रतीयते, अद्रव्यत्व कथमिति चेन्न । अकारादेः प्रणवोत्पादकत्वं वाच्यद्वारा संभवतीति परिहारादद्रव्यत्वमुपपद्यते ।

अस्मदादिस्पर्शनेन्द्रियग्राह्यविजातीयव्यावृत्तोऽद्रव्यं स्पर्शः । स च त्रिविध. । शीतोष्णानुभयात्मकभेदात् । अप्सु

---

सङ्कल्पादीत्यत्रादिपदेन तत्तत्कालो गृह्यते । 'सम्यग् ज्ञाने'ति । सत्त्व यद्ब्रह्मदर्शनम्' इत्यादि वचनात् । 'न द्रव्यरूपा' इति । कापिलास्तु साम्यावस्थगुणत्रयमेव प्रकृतिरिति वदन्ति । तन्न युक्तम् । 'त्रिगुण तज्जगद्योनि.' 'प्रकृते. क्रियमाणानि गुणै' इत्यादि श्रुतिस्मृतिवचनतस्तस्य प्रकृतिगुणत्वस्य सिद्धत्वादिति भाव. । सत्त्वादीना गुणत्व रज्जुवत् बन्धकत्व निबन्धनम् । तदभावादेव भगवतो निर्गुणत्व व्यपदेशः । अध्यात्मशास्त्रे गुणा इति सत्त्वादीना प्राकृताना प्रसिद्धि । नित्यमुक्तेश्वराणा सर्वेणापीन्द्रियेण सर्वार्थग्रहणात् तच्छ्रोत्रग्राह्यत्व स्पर्शादेरप्यस्तीति अतिव्याप्तिरिति अस्मदादीति श्रोत्रविशेषण कृतम् । अस्मदादि श्रोत्रग्राह्यत्वस्य नित्यविभूतिस्थशब्देऽभावादव्याप्ति. स्यादिति तद्वारणाय अस्मदादि श्रोत्रग्राह्यविजातीयव्यावृत्तत्वपर्यन्तानुधावन कृतम् । अस्मदादि श्रोत्रग्राह्यविजातीय स्पर्शादि, तद्व्यावृत्तत्व

शीतस्पर्शः। तेजस्युष्णस्पर्शः। क्षितिपवनयोरनुष्णाशीन-स्पर्श.। पुनर्द्विविधः। पाकजोऽपाकजश्चेति। पृथिव्यां पूर्वः। इतरेषु त्रिषु पर। तत्रामृतगरलतूलोपलगोब्राह्मणचण्डा-लादिस्पर्शविशेषा पाकजभेदाः।

अस्मदादिचक्षुरिन्द्रियैकग्राह्यविजानीयव्यावृत्तमद्रव्य रूपम्। तच्चतुर्धा। सितरक्तपीतकृष्णभेदात्। तत्र सलिलक-लधौतशङ्खशुक्तिशशाङ्कादीना रूपविशेषास्सितभेदा.। हुत-वहजपादाडिमबन्धुजीवविद्रुमपद्मरागादीना रूपविशेषाः रक्त-भेदाः। काञ्चनहरितालहरिद्रादीनां रूपविशेषा पीतभेदाः। मरकतमधुकरजलधरतिमिरतमालदूर्वादीना रूपविशेषा. कृ-ष्णभेदा। पीतिमानमपि रक्तावान्तरभेदं केचिदिच्छन्ति श्रुत्यनुसारात्। प्रकारान्तरेण रूप द्विविधम् भास्वराभास्वर-भेदात्। तेजोगतं भास्वरम्। क्षितिसलिलगतमभास्वरम्। एव चत्वार्येव रूपाणि। एतेन चित्र नाम पञ्चमं रूपमिति मतनिरासः। अत एव चित्ररसगन्धस्पर्शानामपि निरासः।

---

नित्यविभूतिस्थे शब्देऽप्यस्तीति बोध्यम्। एव स्पर्शादिलक्षणेष्व-पि ज्ञेयम्।

'पञ्चाशदक्षरात्मक' इति। अका ह्रस्वदीर्घभेदेन दशविधत्वम्। दीर्घलृकारोऽपिवर्णमातृकाया पठितः। एचश्चत्वार.। अनुस्वारो विस-र्गश्चेत्याहत्याचः षोडश। स्पर्शा पञ्चविंशति। यणश्चत्वारः। ऊष्माण श्चत्वार। क्ष इत्येकम्। इत्यक्षरमातृका पञ्चाशदक्षरात्मिका कथिता। 'व्यञ्जके'ति। शब्दाश्रयावयवसहितवाय्वभिघाततः श्रोत्रेण शब्दोपल-ब्धिरित्यर्थ.। अकारस्य 'तस्य प्रकृतिलीनस्य' ( नै० उ० ना० ) इति प्रणवोपादानत्वश्रवणात् 'यस्य वेदाः शरीर'मिति शरीरत्वश्रवणाच्च वेदाना, द्रव्यस्यैव शरीरत्वोपादानत्वयोः सम्भवान् शब्दस्य द्रव्यत्व स्यादित्याशङ्क्य परिहरति 'अकारादे'रिति। अकारस्य प्रणवकारणत्व सहकारिहेतुत्वमेव। उपादान त्वकारवाच्यो नारायण एव। परमात्म-शरीरत्ववचन तु वेदाना वेदाभिमानिदिव्यपुरुषविषयम्। शरीरवद्वेदाना नित्येश्वरच्छन्दानुवर्तित्वनिबन्धन वेति बोध्यम्। स्पर्शलक्षणमाह'अस्म-

अस्मदादिरसनेन्द्रियग्राह्यविजातीयेतरो रसः । स षोढा, मधुराम्ललवणतिक्तकटुकषायभेदात् । तत्रेक्षुक्षीरगुडादिरसा मधुरभेदा । चूत चिञ्चामलकादिरसा आम्लभेदाः । सैन्धवोपरविकारादिरसा लवणभेदा । किम्पाकनिम्बादिरसास्तिक्तभेदा. । शुण्ठीमरीचसर्षपादिरसा कटुभेदा । हरीतकीविभीतकीचूताकुरादिरसाः कषायभेदा ।

अस्मदादिघ्राणग्राह्यविजातीयेतरो गन्ध । स द्विविधः सुरभिरसुरभिश्च । पाटीरमृगमदघुसृणचम्पकादिगन्धास्सुरभिभेदा । पूतिविस्रादिगन्धास्त्वसुरभिभेदाः । अयं च गन्ध पृथिव्येकवर्ती पाकभेदाद्भिन्न । पवन सलिलादिषु गन्धोपलब्धि पार्थिवससर्गात् अयो दहतीतिवदौपचारिकी । पञ्चीकरणप्रक्रियया सर्वभूतेषु सर्वगुणाना विद्यमानत्वेऽपि प्राधान्याभिप्रायेणोक्तमिति न विरोध. । पाकाद्गुणान्तरोत्पत्ति स्वाश्रये । स्वाश्रयनाशाभावादेवोपपत्ते पीलु(पाकवादि)पाकादिमतनिरास ।

---

**दादिस्पर्शने**'ति । घटादावतिव्याप्तिवारणाय विशेष्यदलम् । अनुद्भूतस्पर्शादाव व्याप्तिवारणाय विजातीयव्यावृत्तत्वपर्यन्तानुधावनम् । सयोगेऽतिव्याप्ति वारणाय स्पर्शनैकेन्द्रियग्राह्येति वक्तव्यम् । **'श्रुत्यनुसारा'** दिति । 'यदग्ने रोहितं रूप तेजसस्तद्रूप, यच्छुक्ल तदपां, यत् कृष्ण तदन्नस्य' ( छान्दो० ) इति श्रुतौ रूपत्रयस्यैव कीर्तनादित्यर्थ. ।

**'एतेन'** इति । नानावर्णतन्तुभिराब्धे पटे चित्रं नाम अतिरिक्तं रूपमुपगतम् तार्किकै । सिद्धान्ते त्वतिरिक्तावयव्यनङ्गीकारात् ओतप्रोतभावेन सयुताना नन्तूनामेव नाना वर्णाश्चित्रपटे भासन्ते इति नातिरिक्तचित्ररूप कल्पनावसर इति भावः । **'पीलुपाके'**ति । पीलुः परमाणु । तत्र पाक इति काणादाना मतम् । सच्छिद्रे पिण्डे अग्न्यवयवसम्पर्कादेव पूर्वरूपनाशरूपान्तरोत्पत्त्युपपत्ते. पूर्वपिण्डनाशो नाभ्युपेय इत्याशयः । आश्रय. पिण्ड, ( घटादिः ) । **'सचे'**ति । सयोग शक्तिश्च सामान्यगुणौ । यावद्द्रव्यवृत्तिगुणत्व सामान्यगुणत्वम् । द्रव्यत्वव्याप-

संयुक्तप्रत्ययनिमित्तं संयोगः । स च सामान्यगुणः षड्द्रव्यवर्ती । अस्य च स्वाभाविकत्वादेरप्रमुपलभ्यमानमंशभेदप्रयुक्ततया न विरोधावहम् । स च कार्याकार्यभेदात् द्विविधः । पूर्वः परिमितानामुभयप्रेरणात्, यथा मेषयोर्मल्लयोर्वा । क्वचिदन्यतरप्रेरणात् यथा स्थाणुश्येनयोस्संयोगः । केचित्संयोगजसंयोगमपि वदन्ति हस्तपुस्तकसंयोगात्कायपुस्तकसंयोग इति । तन्न । हस्तपुस्तकसंयोगेनैवोपपत्तेः । एतेन विभागजविभागोऽपि निरस्तः । विभागोऽपि संयोगाभाव एव न पृथग्गुणः । अकार्यसंयोगस्तु विभुद्रव्ययोः । अजद्रव्यसंयोगः श्रुत्याऽङ्गीक्रियते । अनुमानादप्यजद्रव्यसंयोगसिद्धिः । यथा विभुद्रव्यं विभुद्रव्यसंयोगवत् द्रव्यत्वात् घटवत् तथा विभुद्रव्यमीश्वरसंयुक्तम् द्रव्यत्वात् घटवत् । ईश्वरः कालादिसंयुक्तः द्रव्यत्वात् घटवत् इत्यादिभिः विभुसंयोगस्सिद्धः ।

अथ शक्तिः । सर्वकारणानां कारणत्वनिर्वाहकः कश्चिदद्रव्यविशेषः शक्तिः । तर्कागमाभ्यां तत्सिद्धिः । प्रतिबन्धकमणिमन्त्रादिसन्निधौ स्वरूपसहकारिवैकल्याभावेऽपि यदुपरोधाद्दहनो न दहति सा ह्यतीन्द्रिया शक्तिः । अयस्का-

---

कतावच्छेदकाद्रव्यविभाजकोपाधिमत्त्वमिति यावत् । संयोगत्वं शक्तित्वं च नादृशोपाधिः । 'अंशभेदात्'—मूलशाखादिरूपावच्छेदकभेदात् । अग्रे वृक्षः कपिसंयोगी न मूले इति हि प्रतीतिः । 'उभयप्रेरणात्'—उभयनिष्ठक्रियातः । 'अकार्ये'ति । अजसंयोगः विभ्वोः कालेश्वरयोः । नित्यद्रव्ययोरीश्वरतद्विग्रहयोरपि नित्यसंयोगोऽस्त्येव । अजद्रव्यं नित्यद्रव्यम् । 'श्रुत्ये'ति । अन्तर्यामिब्राह्मणादिश्रुतितः ईश्वरस्य प्रकृतिपुरुषादिषु संयोगस्यान्तर्बहिर्व्यापित्वप्रतिपादनात् सिद्धेरित्यर्थः । 'अथ शक्ति'रिति । अग्नौ दाहकशक्तिः, जलेक्लेदनशक्तिरित्यादि । 'तर्के'ति । 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । × × × पावकस्य यथोष्णता' (वि०

न्तादिषु तत्प्रसिद्धि । सा शक्ति षड्द्रव्यवर्तिनी । भगवन्नि-ष्ठन्त्रं पुराणरत्नादिषु प्रसिद्धम् । एव सर्वत्रापि शक्तिनामक-धर्मविशेषसिद्धि ।

ननु, चतुर्विंशतिप्रकारा गुणा इत्युक्तत्वात् कथ दशैवेति निर्दिश्यते इति चेत् । उच्यते । जीवात्मगुणविशेषाणां बुद्धिसुखदु खेच्छाद्वेषप्रयत्नाना षण्णा ज्ञानविततिरूपत्वेन ज्ञानेऽन्तर्भावस्योक्तत्वात् । धर्माधर्मयोरपीश्वरप्रीत्यप्रीतिरूप-त्वेनेश्वरज्ञानेऽन्तर्भावात् । भावनाख्यसस्कारस्य ज्ञानविशेष-रूपत्वात् । वेगो (त्पतन) त्पादक हेतोरेव वेगाख्यसंस्कारो-पपत्तेः; सयोगमादाय स्थितस्थापकस्यापि संभवात्, शब्दस्प-र्शरूपरसगन्धानां पञ्चानां प्रत्यक्षसिद्धत्वेनाङ्गीकारात् । वि-भागपृथक्त्वयोरपि सयोगाभावमादायोपपत्तेः। परत्वापरत्वयो देशकालसयोगविशेषमादायोपपत्ते हान सख्यापरिमाणद्रवत्व-स्नेहतत्तद्द्रव्यस्वरूपमादायोपपत्ते । गुरुत्वस्य शक्त्यन्तर्भावस्य वक्तुमुचितत्वाच्च दशैवेति सुष्ठूक्तम् ॥

---

पु०) इत्याद्यागमसिद्धा शक्तिः तत्तद्द्रव्ये प्रतिनियता । भगवति चाचिन्त्या नानाविधाश्शक्तयस्सन्ति । 'पराऽस्य शक्तिर्विविधैवश्रूयते' इति श्रुतेः ।

शक्तिसाधक तर्कमाह 'प्रतिबन्धके'ति । यदुपघातात्—शक्तिप्रतिबन्धात् । चन्द्रकान्तमण्यादेर्दाहप्रतिबन्धकत्वं प्रसिद्धम् । प्रतिबन्धकत्वं नाम कारणनिष्ठकार्यानुकूलधर्मविघटकत्वम् । स च धर्म. शक्तिरेवेति शक्तिसाधिका युक्तिः । विघटकत्व कार्योत्पत्तिप्रतिरोधनम् । 'अयस्कान्ते'ति । लोहाकर्षणशक्तिस्तस्मिन् प्रसिद्धेत्यर्थः । सवत्रापि—सर्वद्रव्येऽपि । वैशेषिकमतमनूद्य निरस्यति **'ननु'** इत्यादिना । ज्ञानविशेषरूपत्वात्—सूक्ष्मज्ञानाशरूपत्वात् । **'वेगे'**ति । प्रेरणाविशेषेणैव वेगकार्यस्य दूरपतनस्य सम्भवात् वेगोनामनातिरिक्त. सस्कार कल्प्य इत्यर्थ. । **सयोग**मिति । अवयवसस्थानविशेषमित्यर्थ. । **'विभागे'**ति । असयोगेनस्थितयो. पृथक् स्थ., विभक्तौस्थ. इति प्रतीतिव्यवहारतः

तत्र सत्त्वरजस्तमांसि प्रकृतिगुणा: तत्संबन्धि जीवगुणाश्च । सत्त्वरूपं ज्ञानम् सात्त्विक: काल इत्यादिप्रतीतिरुपाधिवशादौपचारिकी । शब्दादय: पञ्च प्रकृतिकार्यपञ्चमहाभूतगुणत्वेन प्रसिद्धा । शुद्धसत्त्वं तु त्रिपाद्विभूत्यां, तत्प्रवर्तकेश्वरे च । संयोगशक्तिरूपौ गुणौ षड्द्रव्य साधारणाविति विवेक: । इत्यद्रव्य निरूपितम् ॥

इति श्रीवाधूलकुलतिलक श्रीमन्महाचार्यप्रथमदासेन श्रीनिवासदासेन विरचितायां यतीन्द्रमतदीपिकायां शारीरकपरिभाषायाम द्रव्यनिरूपण नाम दशमोऽवतार ॥



## ॥ अथोपसंहारग्रन्थ: ॥

एवं द्रमिडभाष्यन्यायतत्त्वसिद्धित्रयश्रीभाष्यदीपसारवेदार्थसंग्रहभाष्यविवरणसंगतिमालाषडर्थसंक्षेपश्रुतप्रकाशि -

---

संयोगाभावलक्षणावेव पृथक्त्वविभागौ। नातिरिक्तौ गुणौ । 'देशकाले'-ति । विप्रकृष्टसन्निकृष्टदेशकालसंयोगावेव परत्वापरत्वे इत्यर्थ । 'संख्ये'त्यादि । एकत्व—तत्तद्वस्तुस्वरूपमेव, तत्तव्द्यक्तित्वमिति यावत् । द्वित्वादि त्वपेक्षाबुद्धिविशेषविषयत्वमेव । तत्तद्द्रव्यनिष्ठासाधारण संस्थानविशेषौ द्रवत्वस्नेहौ । 'गुरुत्वस्ये'ति । पतनशक्तिरेव गुरुत्वमित्यर्थ:। परिमाणं चन्यूनाधिकावयवसंयोगविशेषलक्षणमेवेति भाव: । अत्रेदं बोध्यम्—यद्यपि परमार्थं नानाभेदवादिना सगुणवादिना च सिद्धान्तिना नानागुणाभ्युपगमे नापत्ति कापि सम्भवति। अथापि—काणादै प्रामाणिकाना गुणाना सत्त्वादीना परित्यागात् अप्रमाणिकानामन्यथासिद्धाना गुणानामरिक्तत्व वर्णनात्तदीयगुणपरिगणना न प्रामाणिक सज्जनहृदयङ्गमेति ज्ञापयितुमत्र तन्मत समालोचना कृतेति॥

॥ इति दशमावतार व्याख्या ॥

## ॥ उपसंहार भागव्याख्या ॥

प्रबन्धोपसहार 'एव' मित्यादिना । नैध्रुवकाश्यपगोत्रजद्रविडाचार्यप्रणीत छान्दोग्यव्याख्यानब्रह्मनन्दिटङ्काचार्यकृतवाक्यव्याख्या-

कातत्त्वरत्नाकरप्रज्ञापरित्राणप्रमेयसंग्रहन्यायकुलिशन्यायसुद-र्शनमानयाथात्म्यनिर्णयन्यायसारतत्त्वदीपतत्त्वनिर्णयसर्वार्थ-सिद्धिन्यायपरिशुद्धिन्यायसिद्धाञ्जनपरगतभङ्गतत्त्वत्रयचुलुक-तत्त्वत्रयनिरूपण तत्त्वत्रयतव्द्याख्यानचण्डमारुतवेदान्तविजय-पाराशर्यविजयादिपूर्वाचार्यप्रबन्धानुसारेण ज्ञातव्यार्थान् स-गृह्य बालबोधनार्थं यतीन्द्रमतदीपिकाख्यशारीरकपरिभाषा-यामस्यामेतेऽर्था प्रतिपादिता । अध्यात्म शास्त्राणां तत्त्व-हितपुरुषार्थप्रतिपादकत्वात् तत्सारेस्मिन्नपि प्रकृतिजीवेश्वर-परिच्छेदे तत्त्वस्य निरूपितत्त्वात्, बुद्धिपरिच्छेदे उपायस्य निरूपणात्, नित्यविभूतिपरिच्छेदे ईश्वरपरिच्छेदे च पुरुषा-र्थस्य निरूपणाच्च तत्त्वोपायपुरुषार्था निरूपिता इति निरव-

---

रूप द्रविडभाष्यम्, श्रीमन्नाथमुनिप्रणीत न्यायतत्त्वशास्त्रम्, तत्पौत्र श्रीमद्यामुनिमुनिप्रणीत सिद्धित्रयम्, श्रीभाष्यादिग्रन्थचतुष्टय श्रीभगव-द्रामानुजमुनिविरचितम्, श्रीविष्णुचित्तार्यविरचिते भाष्यविवरणसङ्ग-तिमाले, श्रीराममिश्रप्रणीत षडर्थसंक्षेप, श्रीभाष्यव्याख्या श्रुतप्रका-शिका श्रीवेदव्यासापरनामधेय श्रीसुदर्शनभट्टाचार्यसूरिविरचिता,तत्त्व-रत्नाकर श्रीकूरेशसूरितनय श्रीपराशरभट्टाचार्यप्रणीत , प्रज्ञापरित्राण वरदनारायणभट्टारकप्रणीत न्यायसुदर्शन च, प्रमेयसग्रह. श्रीविष्णुचि-त्तप्रणीत', वात्स्यवरदगुरुप्रणीतोऽपि एक प्रमेयसग्रहोऽस्ति, न्यायकु-लिश वादिहंसाम्बुवाहापरनामधेयात्रेयरामानुजाचार्यप्रणीतम्, वरद-विष्णुमिश्रकृतो मानयाथात्म्यनिर्णय , न्यायसार: (तत्वसार:) वात्स्य-वरदगुरुप्रणीत., तत्वदीप वादिकेसरिरम्यजामातृयतिकृत ,तत्वनिर्णयो वात्स्यवरदाचार्यकृत:, सर्वार्थसिद्ध्यादिचतुष्टय श्रीमद्वेदान्तदेशिकप्रणी-तम्, तत्वत्रयचुलुक: श्रीमद्वेदान्तगुरुकुमार श्रीवरदगुरुप्रणीत:, तत्वत्र-यनिरूपण श्रीकृष्णपादसूरिविरचितम्, अन्यैरप्याचार्यै: कृत वर्तते, तत्वत्रय श्रीमल्लोकाचार्यकृतम्, तद्भाष्य च श्रीमद्वरवरमुनिवरप्रणीतम्, चण्डमारुतादित्रयमेतद्ग्रन्थकारगुरुवर श्रीमन्महाचार्यप्रणीतम् । एतान् ग्रन्थानभ्यस्य सम्यग्विचार्य च निर्णीयार्थतत्त्व ज्ञातव्या. सर्वेऽप्यर्था: समासत स्सारतश्चात्रग्रन्थे मयाप्रतिपादिता इत्यर्थ. । अनेनैतद्ग्रन्थप्रति-

ध्यम् । एकं तत्त्वमिति प्रतिपादयन्ति सूरय । आत्मानात्मेति द्वेधा विभज्य निरूपयन्ति ऋषय.। श्रुत्यनुसारात् भोग्यभोक्तृनियन्तृरूपं तत्त्वत्रयमिति प्रतिपादयन्त्याचार्या । ज्ञेयम्, तस्य निवर्तकम्, उपादेयम्, तस्योपाय इति चतुर्धा विभज्यानुसदधते केचिदाचार्या.। प्राप्यम्, प्राप्ता, उपाय, फलम्, विरोधीति पञ्चधा कथयन्त्यपरे देशिकाः। अर्थपञ्चकमेव सम्बन्धेन साकं षोढा परिगणय्य वर्णयन्त्यन्ये गुरवः। तेषां तत्तद्विभाजकधर्मपुरस्कारेण तथोपन्यासो नार्थभेदक इति सर्वमवदातम् ॥ वस्तुतस्तु, वेदान्तानां चिदचिद्विशिष्टाद्वैत तत्त्वमेकमेव ब्रह्मेति तात्पर्यम् । अत एव चिदचिद्विशिष्ट ब्रह्मैक (मेवेति)मिति मत्वा भगवान् बादरायण * ...

---

पादिता स्सर्वेऽप्यर्था पूर्वाचार्यप्रबन्धेषु तत्र तत्र वर्णिता एव, अत एव विश्वसनीया समादरणीयाश्चभवन्तीत्युक्तं भवति । तेषां तेषां दार्शनिकानां गुरुवर्याणां स्वस्वविवक्षानुसारेण तत्त्वविभजनं बहुधा सवृत्तम् । सर्वमपि न्याय्यमेवेत्यभिप्रयन्बहुधाविभजनं प्रदर्शयति 'एकं तत्त्व'-मित्यादिना । तत्त्वेष्ववान्तरविशेषप्रतिपादनार्थं हेयोपादेयविवेकार्थं व्युत्पादनार्थं च शिष्याणां च तथा तथा विभज्य निरूपणं तत्तदाचार्यैः कृतम्। सर्वमेतत् सिद्धान्तसम्मतप्रतितत्त्वार्थाविरोधेनोपादेयमित्याशय । उक्तं च भगवतैवोद्धवं प्रति 'इति नानाप्रसंख्यानं तत्त्वानां मृषिभि कृतम्। सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥' (भा-११-२२) इति, तत्वेष्वन्तर्भावबहिर्भावविवक्षया सङ्ख्यानभेद इति ।

'सम्बन्धेन साकं'मिति । श्रीमदष्टाक्षरप्रतिपाद्यनवविधसम्बन्धेन सहेत्यर्थ । 'पिता च रक्षक शेषी भर्ता ज्ञेयो रमापति । स्वाम्याधारो ममात्मा च भोक्ता चाद्यमनूदित ॥' इति च सम्बन्धनवक सग्रहीत पूर्वाचार्यैरनुसन्धेयम् । 'नार्थभेदक' इति । न सिद्धान्तितार्थोपमर्दक इत्यर्थ । विशिष्टाद्वैततत्त्वमेव ब्रह्मसूत्रकृद्भगवद्बादरायणाभिमतमित्याह 'वस्तुतस्तु' इत्यादिना। 'नारायण एवैक तत्त्वम्' इति । तत्व जिज्ञासमानानां हेतुभि सर्वतोमुखै । तत्वमेको महायोगी हरिर्नारायण. पर ॥ सत्य सत्य पुन सत्यमुद्धृत्य भुजमुच्यते । वेदाच्छास्त्र पर नास्ति न

ब्रह्मजिज्ञासा' इत्युपक्रम्य तदेव सप्रकार निरूपितवान् । अतः चिदचिद्विशिष्टो ब्रह्मशब्दवाच्यो विष्ण्वाख्यः परवासुदेवो नारायण एवैक तत्त्वमिति विशिष्टाद्वैतवादिना दर्शनमिति सिद्धम् ॥

इति विविधविचित्र मानमेयप्रकाश
घनगुरुवरदासेनोक्तमादाय शास्त्रात् ।
यतिपतिमतदीप वेदवेदान्तसार
स भवति मतिमान्यस्सत्कटाक्षैकलक्ष्य ॥

इति श्री वाधूलकुलतिलक श्रीमन्महाचार्यस्य प्रथमदासेन श्रीवेंकटगिरिनाथपदकमलसेवापरायण स्वामिपुष्करिणी श्रीगोविन्दार्यसूनुना श्रीनिवासदासेन विरचिता यतीन्द्रमतदीपिकाख्या विशिष्टाद्वैतशारीरकपरिभाषा समाप्ता ॥



---

दैव केशवात्परम् ॥' इति श्रीवेदव्यासप्रमुखनिर्णयादिति भावः । ग्रन्थकारस्तत्त्वज्ञानसम्पादनमेव स्वग्रन्थस्य प्रयोजन मितिवदन् मतिसिद्धिमाशामानो निगमयति 'इती'ति । शास्त्रादितिल्यब्लोपेपञ्चमी । शास्त्रमनुसृत्य । य सता कटाक्षस्यैकलक्ष्यो वर्तते, सोऽधिकारी शास्त्रमनुसृत्य श्रीमन्महाचार्यशिष्येणमया श्रीनिवासदासेनोक्त—प्रोक्त, विविधानि विचित्राणि मानमेययोरवान्तरभिदारूपाणि यत्रैवभूतम्, मानमेययो प्रकाश —यथार्थावबोधो यस्मादेवभूत च सन्त, वेदवेदान्तसारार्थप्रतिपादकत्वास्तत्साररूप यतिपतिमतदीपमेनमादाय-गृहीत्वा, अभ्यस्य, मतिमान् भवति । वर्तमानसामीप्ये वर्तमानव्यपदेशो निश्चिन्तत्वद्योतक । लकारव्यत्ययो वा । भूयादित्याशसतेऽय दयालुर्महामना । यथा गाढान्धकारे स्थित समीचीन दीपमादाय पदार्थान् सम्यक् दृष्ट्वा स्वाभिमतसाधनमर्थमुपादाय स्वार्थ साधयेत् प्रेक्षावान्, तथा गाढाज्ञानान्धकारमध्ये स्थितोऽय चेतनोपि एतद्दीपसाहाय्येन सम्यक् पदार्थान् दृष्ट्वा स्वार्थसाधनमर्थविशेषमुपादाय—अनुष्ठायेति यावत्, स्वाभिमतं पुरुषार्थं सम्पादयेदिति भावः । सत्कटाक्षैकलक्ष्य इति पदेन शास्त्रग्रन्थात्तत्त्वज्ञान महापुरुषकृपाकटाक्षपात्रभूतानामेव भवति, नान्येषामिति ज्ञाप्यते ॥ इति श्री ॥

**॥ इत्युपसंहार भाग व्याख्या सम्पूर्णा ॥**

## * व्याख्योपसंहारः *

पूर्वाचार्ये निबन्धजातमनिश व्यापृश्य तत्सारतः
श्रीशारारकदर्शने प्रकरण योऽसौ व्यतानीत् सुधीः ।
श्रीमच्चोलनृसिहपुर्यभिजन श्रीमन्महाचार्यस-
च्छिष्य. प्राज्ञमनोहर नमनिश श्रीवात्सवर्य भजे ॥१॥
न्याये व्याकरणे शिरोमणिपदप्राप्तश्च षड्दर्शनी-
व्यासङ्गी निजतातदेशिककृपासवृद्धबोधोज्ज्वल. ।
पूर्वाचार्यपदाम्बुजातमधुपः श्रीवादिभीकृद्गुरो-
र्वश्यो व्याकुरुतेदमार्यवशगस्त्वण्णङ्गरार्य. कृती ॥२॥
विद्याभूषणवेदान्त युग्माचार्यपदाश्रितः ।
अण्णङ्गरार्यो व्यदधात् व्याख्यामेता यथामति ॥३॥
श्रीवैष्णवाना मोदाय कृतेय कृपया हरेः ।
श्रीवैष्णवाना दासेन वृन्दारण्यनिवासिना ॥४॥
नेत्राग्निव्योमनेत्रांके वैक्रमाब्दे (सं०२०३२) कृतिस्त्वियम् ।
वृन्दावने तु फाल्गुन्या पूर्णाया पूर्णतामगात् ॥५॥
दासस्य वरिवस्येय याऽभूत् काचन वाचिकी ।
श्रीगोदारङ्गराजोऽय प्रसीदत्वनया प्रभु. ॥६॥
अत्रत्या ये गुणास्ते वै सदाचार्यप्रसादजाः ।
मामकीनाः पुनर्दोषा इति मान्यं मनीषिभिः ॥७॥

इति श्रीमद्द्राविडदेशान्तर्गत श्रीमच्चोलमण्डलमण्डनायमान दिव्यदेशप्रवर श्रीमन्नागपुरा ( तिरुनागूर ) भिजनप्रतिवादिभयङ्कर विद्याभूषणन्यायव्याकरणशिरोमण्युभयवेदान्ताचार्य श्रीमदण्णङ्गराचार्य श्रीवैष्णवदास विरचिता श्रीयतीन्द्रमतदीपिकाव्याख्या लघुवर्तिकानाम्नी सम्पूर्णा विजयता तराम् ॥



※ श्रीमतेरामानुजाय नमः ※

# श्रीमद्रामानुजीयदशश्लोकी

## ( श्रीविशिष्टाद्वैत सिद्धान्तसारसङ्ग्रहरूपिणी )

विद्याभूषणतिरुनांगूर प्रतिवादिभयङ्कराण्णङ्गराचार्य विरचिता



प्रणम्य श्रीपति चाद्यं गुरु रामानुज मुनिम् ।
विशिष्टाद्वैत सिद्धान्ते दशश्लोकी वितन्यते ॥१॥

श्रीनागपुर्यभिजन. श्रीमद्वृन्दावनस्थितः ।
अण्णङ्गरार्यः कुरुते दशश्लोकी तु कौतुकात् ॥२॥

विशिष्टाद्वैतसारार्थो वैष्णवाना मुदे मया ।
प्रस्तूयते दशश्लोक्या छात्रवृन्दार्थितेन वै ॥३॥



न देहो न बाह्यानि खान्यान्तर नो,
न च प्राणबुद्धी न देवो नरो नो ।
न जातो मृतो नो ह्यसङ्घातभावात्,
चिदेकस्वभावात् समो वैष्णवोऽहम् ॥१॥

विधिर्वा निषेधो विशिष्टाधिकारि-
व्यपेक्षः, शरीराणि लोकाश्च भोगाः ।
भवन्त्येव कर्मक्रमात्, कर्मनाशात्
विशिष्टोऽ विशिष्टोऽभवो वैष्णवोऽहम् ॥२॥

न माता पिता वा न चाप्यन्यबन्धु
ऋते वासुदेवान्नृणा मस्मिन मुक्तः ।
स धाता विधाता ममात्मा परात्मा
तदेकाश्रयत्वात् सुखी वैष्णवोऽहम् ॥३॥

सयोगं च साङ्ख्यं मतं गौतमीय
पुराणादि वेदाविरोधि प्रमाणम् ।
प्रमाण प्रमेयं प्रमा चेति मन्यं
प्रमाणाश्रयत्वात् सुधीर्वैष्णवोऽहम् ॥४॥

प्रमाण तु शास्त्र त्रिकालेष्वबाध्यं
प्रमेयं त्वचिच्चित्परेशानतत्त्वम् ।
समादेर्निषेधात् सदद्वैतमेक
श्रुत ब्रह्म तस्याशनो वैष्णवोऽहम् ॥५॥

गुणी निर्गुणश्च श्रुतो विश्वरूपो
ह्यरूपस्सुरूपस्त्वजन्मोरुजन्मा ।
अवद्यप्रहाणाद्विचित्रानुभावात्
तदीयाभिमत्या स्थितो वैष्णवोऽहम् ॥६॥

न भेद रुणद्धि श्रुतिर्मानसिद्ध
निषेधोक्तिरर्थ्या श्रुतौ वै परस्मिन् ।
विजातीयभावात् परिच्छित्यभावात्
समत्वादभेदीभवन् वैष्णवोऽहम् ॥७॥

अजः शङ्करः स्कन्द इन्द्रादयोऽन्ये
यतोवै प्रजाता श्रुताः रक्षिताश्च ।
स विष्णुः परं ब्रह्म वाक्यैककण्ठ्यात्
शिवः शाश्वतस्तं भजन् वैष्णवोऽहम् ॥८॥

क्रियाज्ञानयोगौ तथा ध्यानभक्ती
परप्राप्त्युपाया: श्रुतौ चोदितास्तु ।
परस्वस्वभावानुसन्धानयोगात्
तदीयानुकम्पापरो वैष्णवोऽहम् ॥९॥

न बन्धो न मोक्षस्तथा ज्ञानभोगौ
न मुक्तौ चिदेकावशेषोऽन्यपक्षे ।
पुमर्थत्वयोगान्महानन्दयोगा
विमुक्तौ, तदर्हः कृती वैष्णवोऽहम् ॥१०॥

तदेव श्रुतीनां मतं वैष्णवीयं
मत सारतोऽवर्णय विष्णु तुष्ट्यै ।
द्विजस्याग्र एतद्विचार्य स्थितस्य
त्वविद्या नु कुर्याद्भुजङ्ग प्रयातम् ॥११॥

चन्द्राग्निव्योमनेत्राङ्क (२०३१) वैक्रमाब्दे कृतिस्त्वियम् ।
आनन्दे मकरे पुष्ये पूर्णायां पूर्णतामगात् ॥१२॥

इति श्री वृन्दावन निवास रसिक विद्याभूषणातिरुनागूर् प्रतिवादि-भयङ्कराणङ्गराचार्य श्रीवैष्णवदास विरचिता दशश्लोकी सम्पूर्णा ॥



* श्रीमतेरामानुजाय नमः *

# यतीन्द्रमतदीपिका का विषय संग्रह



श्री सम्प्रदाय मे प्रसिद्ध विशिष्टाद्वैत सिद्धान्त के प्रतिपादन करने वाले श्रीभाष्य प्रभृति प्रौढग्रन्थ अनेक है। उन ग्रन्थों मे प्रवेश की योग्यता तभी हो सकती है, जब प्रकरण ग्रन्थ का ज्ञान हो। इसी दृष्टि से चण्ड मारुतादिक महाप्रबन्धो के निर्माता श्रीमहाचार्य स्वामी जी के प्रथम कृपापात्र (शिष्य) श्रीनिवासाचार्य स्वामिजी महाराज ने कृपापरवश होकर—यतीन्द्रमतदीपिका नामक-शारीरक परिभाषा जिसका दूसरा नाम है,—प्रकरण ग्रन्थ की रचना की। भगवान श्रीवासुदेव जैसे दशावतार वाले है वैसे यह ग्रन्थ भी दशावतार वाला है।

इसमे मुख्यविभाग दो है, जैसे=प्रमाणपरिच्छेद व प्रमेय परिच्छेद। पहला दूसरा तथा तीसरा, ये तीन अवतार प्रमाण परिच्छेद मे आते है। आगे के ( ४ से १० तक के ) ७ अवतार प्रमेय परिच्छेद मे आते है। इन दशअवतारो मे निरूपित विषयो का यहा सार रूप से निर्देश किया जाता है।

पहले अवतार मे यथार्थ ज्ञान के लक्षण का निरूपण किया है। भ्रान्तिस्थल मे भी सत्ख्याति है। ( अर्थात् विद्यमान अर्थ का ही भान होता है। ) तो भी इससे व्यवहार काय नही हो सकता है। इस लिए भ्रान्तिज्ञान कहलाता है। इस प्रकार सत्ख्याति का समर्थन किया। निर्विकल्पक ज्ञान मे भी सविशेष वस्तु का ही भान होता है। ऐसानिरूपण किया है। जो विशिष्टाद्वैत सिद्धान्त मे एक मुख्य निरूपणीय विषय है। तथा प्रत्यक्षज्ञान का सविभाग विस्तार इसमें है।

दूसरे अवतार मे अनुमान प्रमाण का विशेष विवेचन किया है। व्याप्ति और पक्ष धर्मता अनुमापक हेतु के लिए आवश्यक दो आकार है। इसमे से एक आकार से भी विकल=रहित हो जाय तो वह असद्धेतु या हेत्वाभास बन जाता है। हेत्वा भास से किसी भी अभिमतार्थ की स्थापना नही हो सकती है। इस बात को सिद्ध की। इसमे केवल व्यतिरेकी साधन—जो तार्किक प्रभृति दार्शनिक लोगो का अभिमत है—का खण्डन किया है। इसमे यह एक विशेषार्थ प्रतिपादित है।

तीमरे अवतार मे शब्द प्रमाण का निरूपण किया गया है। इममे खास करके वेद को नित्य, निर्दोष अपौरुषेय तथा प्रमाण शिरोमणि स्थापित करके विधि-मन्त्र अर्थवाद आदि वेद भाग का विवरण किया है। तथा वेदान्त (उपनिर्षत्) की परब्रह्म भगवान श्रिय. पति पुरुपोत्तम के परत्व के निरूपण मै निर्भरता स्थापित की गई। इममे वेदकेअङ्ग और उपाङ्ग के विवेचन करके श्रीपाञ्चरात्र तथा वैखानस आगम को भगवत्पूजा मन्दिर प्रतिष्ठादि के लिए मुख्य प्रमाण बताया गया है। तथा दिव्यसूरियो के शिव्य प्रबन्धो तथा पूर्वाचार्य प्रणीत श्रोभाष्यादि प्रबन्धो की महत्ता स्थापित की है। दूसरे मतवादी जो ६ प्रमाणो को मानते है। उनका प्रत्यक्ष अनुमान और शब्द ये तीन प्रमाणाँ मे ही समावेश किया गया है।

चौथे अवतार मे—प्रकृति तत्त्व के २४ विभाग का सविस्तार-वर्णन किया है। 'परमाणु ही जगत का कारण है' तार्किक बौद्ध और जैन लोगो के इस पक्ष को खण्डन करके तथा साख्यामतवाले जो मानते है कि–प्रकृति ही चेतन पुरुष की सान्निधान से अपने आप विविध विचित्र कार्य परिणाम को पैदा करती है। इसमान्यता की खण्डित करके ईश्वर से प्रेरित होकर ही प्रकृति कार्य-परिणाम का कारण बनती है इस सिद्धान्तार्थ का इसमे समर्थन किया है। पञ्ची-करण प्रक्रिया, प्रह्माण्ड गोल की रचना इत्यादि बात भी पौराणिक प्रक्रिया से इस अवतार मे सक्षेप से वर्णित है।

पाँचवे अवतार मे—'भगवान या उनकी चेष्टा ही काल है। दूसरा तत्त्व न ही' इसवाद को खण्डन करके भगवान की सर्जन प्रभृति लीला के मुख्य उपकरण काल को भगवान की एक विभूति रूप से स्थापित किया है। और भी काल के क्षणादि परिणाम होते है कहा कर प्रह्माण्ड के भीतर भगवान भी कालकी प्रतीक्षा करके ही सभी व्यापार करते है, इस बात का निरूपण किया है।

छठ्ठे अवतार मे—नित्य विभूति का निरूपण है। जिस दिव्य विभूति को दूसरे मतवालो प्रायः नही मानते है। विशिष्टा द्वैतसम्प्र-दाय मे नित्य विभूति को विशेप महत्ता दिया जाता है। क्योकि चेतनो की मोक्ष भूमि वही है, तथा मुक्तप्राप्य भगवान श्रीवासुदेव अनन्त मुक्तो को अनवरत आनन्दित करते हुए इस नित्य विभूति मे ही त्रिव्य लोक मे विराज मान है। भगवान का श्रीविग्रह भी दिव्य

है न तु मायिक। इसमे सभी तत्त्व अस्त्र और भूषण के रूप मे मौजूद है। यह बात कही गयी है।

सातवे अवतार मे—बुद्धि का वर्णन है। बुद्धि का अर्थ होता है धर्म भूतज्ञान। जीवात्मा और परमात्मा दोनो केवल ज्ञानमात्र नही, किन्तु ज्ञान स्वरूप–स्वयम्प्रकाशमान स्वरूपवाले होने हुए अपने अपने धर्मभूत ज्ञान से सभी विषय को ग्रहण करने है। धर्म भूतज्ञान ईश्वर और नित्य मुक्त लोगो का असङ्कुचित होकर सदा सर्व विषय प्रकाशक बनता है। बद्धजीव का ज्ञान तो कर्म रूपी अविद्या से सङ्कु-चित होकर कर्मानुसार अल्प अल्प विषय को प्रकाशित करता है। मोक्षकाल मे इसका ज्ञान विकसित होता है। मोक्ष के कारणरूपी भक्ति और प्रपति भी धर्मभूत ज्ञान का ही एक विशेषाकार है। इस अर्थ का निरूपण किया है।

आठवे अवतार मे—जीवात्मा के स्वरूप का वर्णन किया है–जीवात्मा स्वय प्रकाश और ज्ञानगुणवाला, भगवान को शेष भूत वताया गया है वह देह इन्द्रिय मन प्राण और बुद्धि से अतिरिक्त है। जीव की दो अवस्था है बद्धावस्था, और मुक्तावस्था इन दोना अवस्थाये यही सविस्तार वर्णित है।

नववे अवयार मे—ईश्वर स्वरूप का विस्तृत निरूपण किया गया है। जो पर्रब्रह्म पुरुषोत्तम श्रीमन्नारायण है।

ब्रह्मा शिव इन्द्र वगेरे सभी देवो को भगवन्सृष्ट कार्यकोटि मे शास्त्रो मे गिनाया है। इस लिए वे परतत्त्व नही हो सकने है, कह कर के भगवान के परव्यूह विभव अन्तर्यामी तथा अर्चावतारका वर्णन की गया है।

इस प्रकार प्रकृति काल नित्यविभूत बुद्धि जीव तथा परमात्मा इन ६ द्रव्योका निरूपण हुआ।

दशमावतार मे—दश प्रकार के अद्रव्य, जैसे सत्त्व रजः तमः शब्द स्पर्श रूप रसगन्ध संयोग और शक्ति को निरूपित करके अद्वैत समाभ्यधिकरहित एव चिदचि द्विशिष्ट परब्रह्म श्रीमन्नारायण मे ही वेदान्त आदिक सभी शास्त्र को तात्पर्य है। विशिष्टा द्वैत सिद्धान्त की इस मान्यता का समर्थन किया है॥ इस प्रकार विषय के सार को जिज्ञासुजनो के हितार्थ यहाँ मैंने सगृहीत किया है॥ प्र० भ० अ० विद्वान स्वामी वृन्दावन।

# यतीन्द्रमतदीपिका प्रश्नमालिका

छात्रोपकारिणी



## १—अवतारे

१—प्रमाया लक्षण निरूप्य स्मृतेः प्रमात्व मस्ति न वेति वर्णयत ।

२—स्मृतिप्रत्यभिज्ञयोर्भेदमुपपाद्य स्मृतिबीजसंस्कारोद्बोधकानि सनिदर्शन निरूपयत ।

३—प्रत्यक्षस्य कि लक्षण कति च भेदा , सोदाहरणप्रपञ्चयत ।

४—निर्विकल्पकसविकल्पकयोर्लक्षणमुदाहरण च प्रदर्श्य निर्विकल्पकस्य सविशेषविषयकत्व समर्थयत ।

५—भ्रमस्थले तत्तन्मत प्रदर्श्य सिद्धान्ते का वा ख्यातिस्तत्रेति सोदाहरण ब्रूत ।

६—सत्ख्यातेर्भ्रान्तित्व कथमिति निरूप्य-अलातचक्रद्विचन्द्रज्ञानयोस्सत्ख्यातित्व भ्रमत्व च निरूपयत । यद्वा पीत शङ्खभ्रम—दर्पणमुख भ्रमयो सत्ख्यातित्व भ्रमत्व चोपपादयत ।

७—वाक्यजन्य प्रत्यक्षमस्ति न वा ? अद्वैत्यभिमता प्रत्यक्षप्रक्रियामनूद्य सिद्धान्त ब्रूत ।

## २—अवतारे

८—का नाम व्याप्ति ? सद्धेतोः पञ्चरूपाणि कानि ।

९—उपाधेर्लक्षण किम्, कति च भेदा , सोदाहरण निरूपयत ।

१०—लिङ्ग कतिविधम्, सोदाहरण विरादयत ।

११—केवलव्यतिरेक्यनुमान सिद्धान्ताभिमत न वा ।

१२—स्वार्थ परार्थानुमान विभजनौचित्य विमृश्य अवयवत्रयवादः पञ्चावयववादो वा ग्रन्थकृदभीष्ट इति ब्रूत ।

१३—हेत्वाभासस्य लक्षण विभाग च निरूप्य विरुद्धसत्प्रतिपक्षौ सोदाहरण निरूपयत ।

१४—उपमानाऽर्थापत्त्यो. पृथक्प्रमाणत्व कुतो नेति वर्णयत ।

## ३—अवतारे

१५—वेदाना सिद्धब्रह्मणि तात्पर्य मीमासकमतप्रतिक्षेपपूर्वक समर्थयत ।

१६—विधेर्लक्षण विभाग च प्रदर्श्य वेदाङ्गानामुपयोगं वर्णयत ।

१७—पौरुषेयत्वापौरुषेयत्वे निरुच्य सर्वशब्दाना परमात्मपर्यवसानमुप-पादयत ।

## ४—अवतारे

१८—सामान्यविशेषसमवायाना पृथक् पदार्थत्व तार्किकमत खण्डयत ।

१९—सिद्धान्तसम्मतमभावाना स्वरूप विशदीकृत्य महत्तत्त्वस्य लक्षण कार्य च ब्रूत ।

२०—इन्द्रिय सामान्य लक्षणमुल्लिख्य लक्ष्ये सयोजयत ।

२१—सिद्धान्ते द्रव्याणि कति, द्रव्यसामान्यलक्षण किम् । गुणत्रयमेव प्रकृतिरिति मत निरस्यत ।

२२—तन्मात्र भूतयोर्लक्षणे ब्रूत ।

२३—पञ्चीकरण प्रक्रिया निरूपयत ।

२४—सिद्धान्त्यभिमत शरीरलक्षण निरूप्यपराभिमते लक्षणे दोषमा-विष्कुरुत ।

२५—प्राकृतानि तत्वानि कति, सप्रमाण प्रतिपाद्य तेषु तत्वसंज्ञासमा-वेशे निमित्तं च किमिति ब्रूत ।

## ५—अवतारे

२६—कालस्यातिरिक्तद्रव्यत्वमुपपाद्य तस्य प्रत्यक्षत्वं वर्णयत । यद्वा कालस्यैकत्वे क्षणलवादिभेदो भूत भविष्य द्वर्तमानभेदश्च कथं घटत इति निरूपयत ।

## ६—अवतारे

२७—शुद्धसत्त्वस्य कि लक्षणम् ? तस्य ज्ञानानन्दरूपत्व कथम् ।

२८—ईश्वरस्यरूपं दिव्य प्राकृत वा ? तद्रूपस्य सर्वतत्त्वाधारत्व ग्रन्थो-क्तरीत्या वर्णयत ।

## ७—अवतारे

२९—धर्मभूतज्ञानस्य लक्षणं किम् ? तस्य नित्यत्वे ज्ञान जातं नष्टमिति व्यवहारः जागरसुषुप्तिव्यवस्था च कथ घटते ।

३०—ज्ञानस्य स्वयम्प्रकाशत्व समर्थयत ।

३१—कामादेः ज्ञानावस्था विशेषत्वमुपपाद्य तस्यान्त करणधर्मत्व प्रतिपादकश्रुतिविरोध परिहरत ।

३२—भक्ते. प्रपत्तेर्वा स्वरूप यथाग्रन्थ वर्णयत ।

## ८—अवतारे

३३—जीवात्मनो लक्षणमुपवर्ण्य तस्य देहादिभ्यो भिन्नत्वमुपपादयत ।

३४—जीवस्वरूप वाद्यन्तराभिमत निर्दश्य साधुत्वासाधुत्वे विमृशत ।

३५—आत्मनः स्वयम्प्रकाशत्व प्रसाध्यतस्यैकत्वमनेकत्व वेति सप्रमाण-मुपपादयत ।

३६—जीवात्मनामणुत्व निरूप्य तेषामणुत्वे देशान्तरे तदीयभोग्यवस्तूत्पाद. कथ घटेतेति आक्षेपः समाधीयताम् ।

## ९—अवतारे

३७—ईश्वरस्य लक्षणमुल्लिख्य तस्य निमित्त हेतुत्व मुपादानत्वं च समर्थयत ।

३८—कारणवाक्याना नारायणेपर्यवसान ग्रन्थोक्तदिशा वर्णयत ।

३९—अन्तरादित्यविद्या दहरविद्या च रुद्रपरेति शङ्कां प्रतिक्षिप्य नारायणपरा सेति स्थापयत ।

४०—ब्रह्मणो निर्विशेपत्वमविद्यया ससरणं चाद्वैत्यभिमत निरस्य सविशेषत्व समर्थयत ।

४१—भेदाभेदनिर्गुणसगुणश्रुतीना सिद्धान्तरीत्या समन्वय कुरुत ।

४२—ईश्वरस्यैकस्य पञ्चप्रकारत्व कथ घटते ? के च ते प्रकारा, सक्षेपेण वर्णयत ।

## १०—अवतारे

४३—सत्त्वरजस्तमसां लक्षण कार्य भेद च वर्णयत ।

४४—शब्दस्य लक्षण भेद च निरूप्य द्रव्यत्वपक्ष प्रतिक्षिपत ।

४५—रूपस्पर्शयोर्लक्षण सदलप्रयोजन निरूप्य रूप कतिविधमिति वर्णयत ।

४६—शक्तेरतिरिक्तगुणत्व व्यवस्थाप्य तार्किकाभिमताना गुणान्तराणामन्यथासिद्धिमुपपादयत ।

४७—ससम्बन्धमथपञ्चक प्रतिपाद्य विशिष्टाद्वैतब्रह्मतत्वे ब्रह्ममीमासा तात्पर्य ग्रन्थोक्तदिशा वर्णयत ।



# शोधनिका

★

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ' | १६ | दामो | दामो |
| ४ | ५ | रतन्ना | रतन्नाः |
| १० | ४ | त्वन्य | त्वैत्य |
| ११ | ४ | द्दग | द्देग |
| १३ | २७ | मूलेय | मूलेय |
| १४ | २ | षणि | षाणि |
| १५ | २३ | ष्ठाभा | ष्ठात्यन्ताभा |
| २५ | १ | द्वितीयो | तृतीयो |
| २८ | १२ | (त्वा) | (त्वा) |
| ३४ | १८ | पूयत | पूर्यते |
| ३७ | १० | न्द्रिम् | न्द्रियम् |
| ३७ | २० | त्वाम्था | त्वावस्था |
| ४१ | १० | त्तज | त्तेजः |
| ४४ | १५ | भतस्य | भूतस्य |
| ४४ | २२ | रुव्यक्त | रव्यक्त |
| ४५ | ६ | गित्त्व | गित्व |
| ५० | १६ | भते | भूतेः |
| ५० | २० | अताता | अतीता |
| ५१ | १३ | ण | णव |
| ५१ | २८ | माशै | मशै |
| ५७ | १८ | वत्थानं | वस्थान |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५७ | २८ | जष्टो | जुष्टो |
| ६० | २२ | तजर | तैजस |
| ६१ | ७ | रधृ | रधृति |
| ६१ | १० | द्वप | द्वेष |
| ६१ | २० | द्वित्रि | द्वित्र |
| ६२ | २६ | न्तरव्य | नाख्य |
| ६५ | ५ | विवेका | विवेको |
| ६५ | १४ | णम् | णाम् |
| ६७ | २३ | जानात | जानाति |
| ७१ | १३ | भान्क्तो | भोक्ता |
| ७४ | २५ | जनि | जैनि. |
| ७५ | २७ | कव | कैव |
| ७५ | २७ | ननन्द | नानन्द |
| ७८ | ४ | कर्गणै | कैर्गणै |
| ८१ | ४ | स्यव | स्यैव |
| ८१ | १८ | वशि | वैशि |
| ८४ | २७ | गिरिः | गिरः |
| ८७ | ६ | पर्यङ्क | पर्यङ्को |
| ८७ | १६ | दज | दश |
|  | १४ | न हान म | तो स |
| ८६ | १५ | स्नेत | स्नेहानां त |

अतिस्फुटोपलम्भास्तु काश्चनात्र न शोधिताः ।
अशुद्धयस्तथैवान्याः विशोध्याः प्राज्ञसत्तमैः ॥